# अथ नवमोऽध्यायः

## मण्डपस्य ऋषिपुत्रस्याख्यानकम्

महादेव उवाच

अत्रैवोदाहरन्तीममितिहासम्पुरातनम् ।
ऋषिः कुष्माण्डतनयो मण्डपः सङ्गदोषतः ॥ १ ॥
बालएव मम क्षेत्रे पापञ्चरति वेदवित् ।
पित्रा निवारितो मात्रा भ्रात्रा श्रोत्रियवंशजः ॥ २ ॥
असत्सङ्गं त्यजति नो विषयासक्तमानसः ।
परदारपरद्रोहपरद्रव्यरतः सदा ॥ ३ ॥
परापवादकुशलो वेदवादविवर्जितः ।
यथा यथा वयस्तस्य वृद्धिम्प्राप सुदुर्मतेः ॥ ४ ॥
तथा तथा पापरतः सत्सङ्गविमुखः सदा ।
मित्रैर्द्वित्रैर्नरपतेः सम्वृतो राजवेश्मनि ॥ ५ ॥
प्रविष्टो धनमादाय चौर्येण स विनिर्गतः ।
वेश्यागृहे तन्निक्षिप्य तया सह दिवानिशम् ॥ ६ ॥
रमते मण्डपो विप्रः पितृविप्रत्वनाशकः ।
कदाचिद्रममाणोऽसा तृषार्तः समपद्यत ॥७॥
मञ्चाधस्तात्ताम्रपात्रं गृहीत्वा पीतवान् सुराम् ।
जलबुद्ध्या पातकं तज्जातं तदविचारतः ॥८॥
किमेतद्धि मया पीतमिति वेश्यां स पृष्टवान् ।
तमाह सा मयानीतं सुरापात्रं सुसौख्यकृत् ॥९॥
त्वदर्थे सम्भृतम्मध्वा पुनः पिब सकृत् सकृत् ।
इति वेश्यावचः श्रुत्वा धिक् धिक् पापम्महत् कृतं ॥१०॥
वेश्यासङ्गेन मदिरा पीता ब्राह्मणसूनुना ।
मण्डपस्य ततो मित्रद्वयमासीत् सुदुःखितम् ॥११॥
वेश्यामुखात्सुरापानं तस्य श्रुत्वा जगर्हतुः ।
आदौ विप्रस्ततोऽस्माकं सङ्गी वेश्यारतस्ततः ॥१२॥

मधुपानं ततो जातं ततस्त्वं किं करिष्यसि ।
आच्छादयामः पापन्ते सुवर्णन्देहि नो बहु ॥१३॥
तथेत्युक्त्वा पुनर्वेश्यागारङ्गत्वा प्रविश्य सः ।
सुवर्णं याचयामास ताडयामास तञ्च सा ॥१४॥

वेश्योवाच

वराक मम लीलायाः स्वादञ्ज्ञात्वाऽपि मूर्खवत् ।
सुवर्णं याचसे किं त्वं लक्षमात्रं कियन्मम ॥१५॥
चुम्बने चुम्बने लक्षं वरेभ्यः प्राप्तमद्य मे ।
त्वम्मयोपेक्षितो दीनो दत्त्वा प्रार्थयसे धनम् ॥१६॥
कामशास्त्रं त्वया मूढ ! पठितन्न कदाचन ।
रतिलीलान्न जानासि मम कन्दर्प्पमोहिनीम् ॥१७॥
गच्छ गच्छ सुखेनाऽऽशु यावद्दास्यो न सन्ति मे ।
ताडयिष्यन्ति सर्वास्त्व निर्लज्जम्ब्राह्मणाधमम् ॥१८॥
वेश्यागृहात्ततस्तूर्णं क्षुधितोऽतिपिपासितः ।
पितुःसकाशगमन्मातुश्च प्रियकाम्यया ॥१९॥

**मण्डवटुश्चेष्टाकरणे दारकयोरस्य गृहागमनवर्णनम्**

ततस्तौ दारकौ प्राप्तौ मित्रत्वे परिकल्पितौ ।
वदन्तौ देहि कनकमस्मर्दशन्त्वमाशु तत् ॥२०॥
राज्ञोगृहाद्यदानीतं स्तेयेनाऽस्माभिरुत्तमम् ।
इति श्रुत्वा पिता तस्य महादुःखसमन्वितः ॥२१॥
उवाच दारकौ भीतः कौ युवां केन कर्मणा ।
कौ भवन्तौ कथं सङ्गः कृतोऽनेन दुरात्मना ॥२२॥
तद्धिरण्यं च कुत्राऽऽस्ते यदर्थं वाम्व्यवस्थितौ ॥२३॥

दारकावूचतुः

अहङ्कुविन्दस्त्वत्पुत्रो मण्डपो नापितस्त्वयम् ।
मैत्री त्रमाणां सम्भूता दैवाद्दोषत्रयात्मिका ॥२४॥
विभज्य भागाः सर्वैर्हि ग्राह्या इत्यवधिः कृतः ।
अनेन वेश्याभवने निक्षिप्तं सर्वमेव हि ॥२५॥
सा न प्रयच्छति मुने ! वेश्या वादविवादिनी ।
अतःपरं राजगृहे गम्यते वक्तुमेव हि ॥२६॥

देहि दापय चाऽस्माकं धनं शीघ्रं सुदुःखदम् ।
नोचेत्तवाऽऽत्मजः साधो ! शूलप्रोतो भविष्यति ॥२७॥
रक्ष पुत्रन्तथाऽस्मांश्च स्वात्मानमपि चाऽनघ ! ॥२८॥

कूष्माण्ड उवाच

आगच्छत मया सार्द्धं राजराजस्य सन्निधौ ।
पुत्रन्नीत्वा गमिष्यामि शास्त्यर्थंन्धर्मतो यथा ॥२९॥
राजभिः कृतदण्डास्तु शुद्ध्यन्ति मलिनो नरा ।
अशर्वेसकृतः पापा गच्छन्ति नरकस्मृताः ॥३०॥

तावूचतुः

पुत्रं समर्पय मुने ! किमर्थंन्त्वङ्गमिष्यसि ।
राज्ञो गृहे विवादार्थे न गन्तव्यं कदाचन ॥३१॥

कूष्माण्ड उवाच

त्वया सह न सम्बन्ध इत्युक्त्वा नीयतां सुतः ।
नोचेदहङ्गमिष्यामि राजवेश्म सुनिश्चितम् ॥ ३२ ॥

तावूचतुः

त्वया सह न सम्बन्धो देहि मित्रद्रुहं शठम् ।
अस्माभिरेवकर्तव्यं तिष्ठ तिष्ठेति लज्जितः ॥ ३३ ॥

कूष्माण्ड उवाच

पुत्र गच्छ ! द्विजश्रेष्ठ निन्द्य कृत्यं कृतन्त्वया ।
प्रायश्चित्तं विधायाशु राज्ञा दत्तं न चाऽन्यथा ॥ ३४ ॥
आगन्तव्यं त्वया वत्स ! याहि नो चेद्यथासुखम् ।
तावन्नाहन्तव पिता न सुतस्त्वं ममाद्यवान् ॥ ३५ ॥

श्रीमहादेव उवाच

जैगि(गी) षव्य मुनिश्रेष्ठ तेन विप्रेण मण्डपः ।
समर्पितस्तयोः पुत्रः स्नेहमुत्सृज्य दूरतः ॥ ३६ ॥
धार्मिकाणान्धनैः पुत्रैः कलत्रैः किम्प्रयोजनम् ।
धर्मसङ्ग्रहशीलाश्च यतस्ते काशिसंश्रयाः ॥ ३७ ॥
पुत्रो भ्राता पिता वाऽपि यः काश्याम्पापमाचरेत् ।
त्याज्य एव स पापात्मा भवेत्संसर्गजम्भयम् ॥ ३८ ॥

तौ तं नीत्वा दूरदेशं ताडयामासतुर्भृशम् ।
स ताड्यमानो मूर्च्छान्ताम्प्राप मृत्युसमाम्मुने ॥ ३९ ॥
मृतोऽयमितिचोत्सृज्य ययतुस्तौ विपण्णवत् ।
पश्चात्तापेन सन्तप्तावसिसङ्गमसन्निधौ ॥ ४० ॥
त्यक्त्वा विप्रसुतम्भीतौ गतौ सिद्धेश्वरालयम् ।
तत्रोषित्वा त तै रात्रिं दुःखितौ भृशम ॥ ४१ ॥
पश्चत्तापपरौ तौ तु पुनरन्वेपितुं गतौ ।
मृतो वा जीवति तु वा ज्ञात्वा देशन्त्यजाम हे ॥ ४२ ॥
यावद्विचारणपरावागतावसिसङ्गमे ।
तावत्ततो द्विजसुतो गतमूर्च्छः प्रतस्थिवान् ॥ ४३ ॥
पञ्चक्रोशात्मकस्यैव शिललिङ्गस्य तद्दिने ।
प्रदक्षिणम्प्रकुर्वन्ति शिवमाहात्म्यवेदिनः ॥ ४४ ॥

**मण्डपस्यकर्दमेशसन्निधौ रात्रिजागरणवर्णनम्**

क्षेत्रप्रदक्षिणाङ्कर्तुं सङ्गेन चलितः स च ।
तस्मिन् दिने कर्दमेशसन्निधौ यात्रिणः स्थिताः ॥ ४५ ॥
सोऽपि तत्र स्थितो विप्रो मण्डपो मण्डपोऽभवत् ।
रात्रो जागरणं तेन कृतन्नित्यं शिवाप्रतः ॥ ४६ ॥
सर्वैः प्रोत्साहितः साधु साधु साध्विति साध्विति ।
अयम्परमशैवस्य कूष्माण्डस्य तु मण्डपः ॥ ४७ ॥
पुत्रः शिवव्रतधरः साधु नृत्यति गायति ।
न तस्य चेष्टितङ्कोऽपि तन्मध्ये वेत्ति तत्त्वतः ॥ ४८ ॥
अतएवाऽऽदृतः सद्भिर्भक्तिन्दृष्ट्वा बहिर्गताम् ।
सोऽपिचारुविचित्राङ्गः सर्वेषां सुमनोहरः ॥ ४९ ॥
बभूव सद्भक्तिपरः सत्सङ्गेन द्विजोत्तमः ।
विचार्य मनसिह्येवं शिवभक्त्या सताम्प्रियः ॥ ५० ॥
जातोऽस्मि दुष्टोऽपि सदा पञ्चपातकसंयुतः ।
साधुवादः सतां ह्येषो भवति प्रत्यहम्मम ॥ ५१ ॥
धनधान्यादिलब्धिश्च भोजनाच्छादनानि च ।
अनायासेन लभ्यन्ते ऋजुमार्गेण नित्यदा ॥ ५२ ॥
शिवेभक्तिः सतान्तुष्टिर्देहपुष्टिर्निराकुला ।
येन मार्गेण भवति स मार्गः सर्वसम्मतः ॥ ५३ ॥

एवम्विचारयन् सोऽथ चण्डिकाम्प्राप मण्डपः ।
तत्र पूजा भीमचण्ड्याः कृत्वा काशिनिवासिभिः ॥ ५४ ॥
ब्राह्मणैर्भोजितः सम्यगादृत्य शिवभक्तितः ।
उपविष्टस्ततो रात्रौ देव्याः पुरत आदृतः ॥ ५५ ॥
क्षेत्रमाहात्म्यकथनं श्रवणञ्चक्रुरुत्सुकाः ।
ततो विष्णुजनाः शैवाः कीर्तनञ्चक्रुरादृताः ॥ ५६ ॥
तन्मध्ये मण्डपः शौण्डो नृत्यङ्गानञ्चकार ह ।
साधुवादेनमहताम्पुनस्तैः साधु सत्कृतः ॥ ५७ ॥
तस्याऽपि च मनोब्रह्मन् शिवे हि निममज्जत ।
अथ तृतीये दिवसे मार्गे एव स मण्डपः ॥ ५८ ॥
नृत्यन् गच्छति गायन् हि स्वयमेव शिवः शिवम् ।
पदे पदे दक्षिणतः क्षेत्रस्य मम स द्विजः ॥ ५९ ॥
ब्रह्महत्यादिपापानां प्रायश्चितं भवेद्यथा ।
महादेव ! महादेव ! वासुदेव ! शिवेति च ॥ ६० ॥
स्मरन्नृत्यभीक्ष्णंसः सर्वपापबहिष्कृतः ।
तृतीये दिवसे गत्वा तन्देहलीविनायकम् ॥ ६१ ॥
पूजयामास सोऽव्यग्रः काशीभक्तिविवृद्धये ।
मण्डपो लौल्यरहितः शिवनामपरायणः ॥ ६२ ॥
बलाद्दत्तमपि त्यक्त्वा हरिकीर्तनतत्परः ।
नाश्नाति न पिबत्यम्भो न कस्याऽपि वशे स्थितः ॥ ६३ ॥
निर्द्वन्द्वः समदृक्शान्तो बभूव गतसाध्यवसः ।
ब्राह्मणेन मया स्तैन्यं सुवर्णस्य कृतं रहः ॥ ६४ ॥
वञ्चितश्च पिता मान्यो माता साध्वी च वञ्चिता ।
पापेनोपार्जितम्वित्तं वेश्यावेश्मनि तिष्ठति ॥ ६५ ॥
मनसा विप्रहननं गसनम्मातुरेव च ।
सम्पन्नञ्च सुरापानं साक्षाद्वेश्यागृहेन किम् ॥ ६६ ॥
आहारो मैथुनन्निद्रा मिथ्याचदादयोऽपिवा ।
जाता मम वराकस्य कथम्पापपरिक्षयः ॥ ६७ ॥
अनुतापैः सुसन्तप्तो मण्डपो मण्डवर्जितः ।
क्षेत्रप्रदक्षिणङ्कुर्वन्निष्पापः समपद्यत ॥ ६८ ॥

कश्चिद्रुदति संस्मृत्य संस्मृत्य स्वाघसञ्चयम् ।
कश्चिद्धसति क्षेत्रस्य प्रदक्षिणकृदित्यहम् ॥ ६९ ॥
काशी काशीति शिवशङ्कर! केशव ।
पाहि माम्पतितन्दीनं गुरुदेवापराधिनम् ॥ ७० ॥
रामेश्वरे समागम्य स्नात्वा सन्तर्प्य देवताः ।
रामेश्वरं समभ्यर्च्य सोमनाथन्तथाऽर्च्य च ॥ ७१ ॥
रामं राजीवपत्राक्षं सीतालक्ष्मणसंयुतम् ।
न भुङ्क्ते न पिबत्यम्भो नृत्यगीतादितत्परः ॥ ७२ ॥
प्रार्थ्यमानोऽपि गृह्णाति न किञ्चिदपिखेदकृत् ।
ततः प्रचलिताः सर्वे यात्रिणः शिवतत्पराः ॥ ७३ ॥
मण्डपोऽपि स्मरन्काशी शिवम्विष्णुम्प्रतस्थिवान् ।
वृषध्वजं समानाद्य स्नात्वा वै कापिले जले ॥ ७४ ॥
देवंसम्पूज्य विधिवत् स्थित्वा तत्र च पूर्ववत् ।
ततः प्रभाते वरणासङ्गमे स्नानमाप्य च ॥ ७५ ॥
गताः सर्वे विश्वनाथम्प्र (न्द्र) ष्टुं श्रीपार्वतीपतिम् ।
तत्र स्थित्वा महापूजां कृत्वा सर्वे महाजनाः ॥ ७६ ॥

**मण्डपस्थविश्वेश्वरप्रसादात्पापान्मुक्तिवर्णनम्**

अन्नाऽदिवासो दानानिददुः शङ्करतुष्टये ।
मण्डपोऽपि तथा कृत्वा मोक्षमण्डपमध्यतः ॥ ७७ ॥
साष्टाङ्गम्प्रणतः प्राह सत्सदोमध्यगोऽघकृत् ।
मया पापानिसर्वाणि सुमहान्तिबहून्यपि ॥ ७८ ॥
कृतानि तत्र वदत निष्कृतिम्ममसत्तमाः ।
यथाऽहम्पापनिर्मुक्तो भवामि तु तदुच्यताम् ॥ ७९ ॥

सदस्या ऊचुः

त्वन्निष्पापोऽसि भक्तोऽसि शिवयोः केशवस्य च ।
पञ्चक्रोशात्मकं लिङ्गं सत्सङ्गाद्दक्षिणीकृतम् ॥ ८० ॥
मैत्रीवाणिज्यमूल्याद्यैः किम्पुनः श्रवणादिभिः ।
येनकेनाऽपि सुमह तस्य पापं न विद्यते ॥ ८१ ॥

मण्डपोवाच

पित्रा निष्काशितः सोऽहं कथं यास्यामि तद्गृहे ।
प्रतीतिकारणं किञ्चिदस्ति चेद्गमनं गृहे ॥ ८२ ॥

प्रेषयन्तु तदा सभ्याः शास्त्रप्रत्ययसंयुताः ।
गर्हयन्तो गृहस्था नो नोचेत्किङ्गमनेन मे ॥ ८३ ॥

सदस्या ऊचुः

आकारयस्व पितरमस्मद्वचनगौरवात् ।
प्रतीतिन्दर्शयामोऽद्य दण्डनाथस्य सन्निधौ ॥ ८४ ॥

श्रीमहादेव उवाच

मण्डपोऽथ गृहद्वारं गत्वा शिवशिवेति च ।
महादेवमहादेवेत्युत्वा तूष्णीं व्यवस्थितः ॥ ८५ ॥
कूष्माण्डः प्राह दयिताङ्को ऽतिथिर्द्वारि वर्तते ।
पश्य पश्याऽऽशु सुभगे शिववाक् शङ्करप्रियः ॥ ८६ ॥
सा भर्तुर्वचनाद् गत्वा दृष्ट्वा मन्डपमात्मजम् ।
उवाच वचनम्भीता भर्तुः पुत्रार्थमातुरा ॥ ८७ ॥
अकृत्वैव च निर्वेशं कथमागमनम्वद ॥ ८८ ॥

मण्डप उवाच

आहूयन्ति यदस्यास्त्वां पितरं च ममानघम् ।
निर्वेशवार्तास्विहुलां त एव ब्रूयुरग्रतः ॥ ८९ ॥
जननीमण्डपस्याऽथ गत्वा कूष्माण्डमब्रवीत् ।
पुत्रस्तेकृतनिर्वेशः शिवस्मरणतत्परः ॥ ९० ॥
द्वारि तिष्ठति स द्वेषो नाऽतिथिः कश्चनेतरः ।
कृतनिर्वेशमनघं श्रुत्वा पुत्रं तु स द्विजः ॥ ९१ ॥
उत्थायाऽऽगत्या सहसा ददर्श शिवरूपिणम् ।
रुद्राक्षमालिनं शान्तम्विभूतिकृतभूषणम् ॥ ९२ ॥
उवाच किं समायातः शीघ्रं धर्मेण यो महान् ।
नहि स्वल्पेन धर्मेण प्रायश्चित्तं महद्भवेत ॥ ९३ ॥

**पापमुक्तस्य मण्डपस्यवर्णनम्**

मण्डपउवाच

मया बहूनि पापानि कृतानि विविधानि च ।
न ज्ञायन्ते त्वया पित्रा किमन्यैर्दूरसंस्थितैः ॥ ९४ ॥
बलात्त्वामाह्वयन्त्येव सदस्याः शुद्धिदर्शिनः ।
यद्रोचते कुरु तथा त्वम्कतस्नेहेन मा व्रज ॥ ९५ ॥

इति श्रुत्वा मण्डपस्य वचः पत्न्या समन्वितः ।
मुक्तिम्मण्डपिकाम्पश्यत्सदस्यैः संस्थितां शुभाम् ॥ ९६ ॥
तैराहूतो द्विजवरैर्धर्माधर्मविजारकैः ।
उपवेश्य तमूचुस्ते पुत्रस्ते शुद्धिमाप्तवान् ॥९७॥

कूष्माण्डउवाच

प्रायश्चित्तेन केनाऽसौ शुद्धिम्प्राप्तो ममाऽऽत्मजः ।
प्रतीतिर्ममका वा स्यादनेन सह भुज्यते ॥ ९८ ॥

सदस्या ऊचुः

मुक्तिमण्डपिकायास्तु स्वामी विष्णुर्नचाऽपरः ।
सचेद्वदति वेदापमा तदाशङ्का न चोत्ततम् ॥ ९९ ॥
तत्पापदाभानुमुख्या वदिष्यन्ति च सत्तामाः ।
तदा मन्यस्वसुप्रीत शास्त्रदेवप्रसादतः ॥ १०० ॥
इत्युक्त्वा तं सदस्यास्ते तुष्टुवुर्विष्णुमव्ययम् ।
रविं ढुण्ढिं दण्डपाणिं भैरवञ्चैव पञ्चमम् ॥ १०१ ॥
पञ्चाऽपि तत्र सुप्रीता मुक्तिमण्डपमध्यतः ।
प्रादुर्भूता महात्मानो लोकप्रत्ययकारकाः ॥ १०२ ॥

विष्णुरुवाच

अयं शुद्धो दुराचारो मण्डपः साधुसङ्गमः ।
क्षेत्रप्रदक्षिणं कृत्वा कीर्तयित्वा जगद्गुरुम् ॥ १०३ ॥
माहात्म्यश्रवणञ्जातं क्षेत्रस्याऽशुभनाशनम् ।
तस्माद्गच्छत्वयं स्वीयं गृहम्पित्रा समन्वितः ॥ १०४ ॥

ढुण्ढिरुउवाच

काशीति नामजपतां शिवनामतुल्यं विघ्नादिपापनिचयो विलयम्प्रयाति ॥ १०५ ॥
किन्तत्कथाश्रवणकीर्तनवासदानैः सम्यक् प्रदक्षिणवतामशुभस्यनाशः ॥ १०६ ॥

दण्डपाणिरुवाच

काश्याम्पापं ये प्रकुर्वन्ति पापास्तेषां दुःखञ्जायते निश्चयेन ।
शम्भोर्लिङ्गं सच्चिदानन्दरूपं पञ्चक्रोशं तत्परिक्रम्य शुद्धाः ॥ १०७ ॥

कालभैरवउवाच

कार्यम्ममैतत्खलु पापिनां सदा करोमि दण्डम्बहुधाऽवश्यमेव ।
प्रदक्षिणीकृत्य समागतस्त्वशं काशीश्विशुद्धो न विचार्यमस्ति तत् ॥ १०८ ॥

श्रृण्वन्तु सर्वे वक्ष्यामि काशीमाहात्म्यमद्भुतम् ।
न चाऽत्र विस्मयः कार्यः काशीम्प्रति कदाचन ॥ १०९ ॥

आसीत्त्रेतायुगेविप्रः शाण्डिल्यः समदर्शनः ।
ज्ञानविज्ञानसम्पन्नो विनष्टाशेषसंशयः ॥ ११० ॥

तस्याभवद्विशालाक्षी नाम्ना चैवाऽतिसुन्दरी ।
पित्रा दत्ता सुमन्त्रेण विधिना वह्निसन्निधौ ॥ १११ ॥

अवन्तीवासिने सा हि पितृगृहे स्थिताऽभवत् ।
सम्प्राप्ता यौवनं काले नायातस्तत्पतिः पुनः ॥ ११२ ॥

**पश्चातापपूर्वकप्रायश्चितवर्णने विशलाक्ष्या आरकावर्णनम्**

पुश्चलीसंगदोषेण जाता सा स्वैरिणी परा ।
काश्याञ्चकार बहुधा पापन्तारुण्यमास्थिता ॥ ११३ ॥

रात्रिन्दिनन्तथा सर्वे युवानः सुवशीकृताः ।
निर्धनाश्चकृताः सर्वे रूपसौभाग्यसम्पदा ॥ ११४ ॥

देशान्तरगताश्चान्ये तद्गुणाकृष्टचेतनाः ।
एवं सा पापनिरता चक्रे पापमहर्निशम् ॥ ११५ ॥

मार्गशीर्षे कदाप्यासीद्यात्रा काश्या द्विजोत्तमाः ।
पञ्चक्रोशाश्रितापुण्या दुरितार्णवतारिणी ॥ ११६ ॥

यात्रिणो वीक्ष्य सा हृष्टा हरिष्यामि धनम्बहु ।
नृत्यस्व्याजेन गानेन सर्वेषां काशिवासिनाम् ॥ ११७ ॥

इति निश्चित्य सा पापा गता तैः काशिवासिभिः ।
दुर्गाकुण्डे स्थिताः सर्वे यात्रिणस्तद्दिने गताः ॥ ११८ ॥

साऽपि तत्र विशालाक्षी चक्रेवासंशुभोदया ।
रात्रौ जागरणं चक्रे धनलोभेन नर्त्तनम् ॥ ११९ ॥

ननर्त सा विशेषेण जगौ साऽतिमनोहरम् ।
कृता विमनसः सर्वे तया गानाच्च नर्तनात् ॥ १२० ॥

सम्प्राप्तञ्च धनंभूरि तया यात्रार्थिनान्नृणाम् ।
एवं द्वितीये दिवसे कर्दमेश्वरसन्निधौ ॥ १२१ ॥

तृतीये देहलीशे च चक्रे सा वरवर्णिनी ।
रामेश्वरे चतुर्थे तु स्नात्वा सा वरुणाजले ॥ १२२ ॥

शुश्राव सा वाच्यमानम्पुराणन्देवसन्निधौ ।
काशीमाहात्म्यसंयुक्तं श्रृण्वतां सर्वयात्रिणाम् ॥ १२३ ॥

काशीकृतानाम्पापानां यातनाम्भैरवीम्पराम् ।
शृण्वन्त्या भाग्ययोगेन पश्चात्तापो महान्भूत् ॥ १२४ ॥
गर्हयामास चाऽऽत्मानं मूर्च्छिता पतिता भुवी ।
कष्टा धैर्यं समालम्व्य तीव्रवैराग्यमागता ॥ १२५ ॥
ददौ तद्वसु विप्रेभ्यः सर्वाण्याभरणानि च ।
पुनर्नैवं करिष्यामीत्येवं सञ्जातनिश्चया ॥ १२६ ॥
पप्रच्छ विनयोपेता ब्राह्मणान् सा महायशाः ॥ १२७ ॥

विशालाक्ष्युवाच

ब्रूत विप्राः ! सुमन्दाया निष्कृतिर्यदि विद्यते ।
मादृश्याः पापशीलायाः कृपया दीनवत्सलाः ॥ १२८ ॥

विप्राऊचुः

धन्याऽसि त्वम्विशालाक्षि ! पापेभ्यो नाऽस्ति से भयम् ।
कृता प्रदक्षिणा काश्या वैराग्यञ्च समागतम् ॥ १२९ ॥
दत्तन्त्वया धनं सर्वं निंवृत्ता पापधीस्तथा ।
कृतार्थाऽसि महाभागे ! कुरु क्षेत्रप्रदक्षिणाम् ॥ १३० ॥
अस्माभिरेव सहिता ततः शुद्धिमवाप्स्यसि ।
पुनः पापपरा माभूरित्यूचुस्ते तपोधनाः ॥ १३१ ॥
साऽपि श्रुत्वा वचस्तेषा भक्त्या नत्वा ततो द्विजान् ।
चक्रे रात्रौ प्रणयिनी विष्णोर्नर्तनमद्भुतम् ॥ १३२ ॥
पञ्चमे दिवसे सर्वे यात्रिणो वृषभध्वजे ।
स्थिता साऽपि महाभागा निवृत्ता सर्वपापतः ॥ १३३ ॥
ततः प्राप्ताः क्षणेनैव वरणासङ्गमञ्जनाः ।
तत्रस्नात्वा विधानेन नत्वा केशवमादरात् ॥ १३४ ॥
मुक्तिमण्डपिकाम्प्राप्ताः साऽपि तैः सममेव हि ।
तत्र पूजां सुमहतीं कृत्वा विश्वेश्वरस्य सा ॥ १३५ ॥
श्रूत्वा यथाविधानेन आजगाम निजालयम् ।
आदृता सा जनैः सर्वैः पित्रा साऽपि महात्मना ॥ १३६ ॥
तथाऽयमपि भो विप्राः ! विशुद्धो मण्डपो द्विजः ।
इति श्रूत्वा वचस्तस्य भैरवस्य महात्मनः ॥ १३७ ॥

सर्वेविगतसन्देहा बभूवुर्ये सभासदः ॥ १३८ ॥

रविरुवाच

सत्सङ्गतःक्षेत्रप्रदक्षिणं कृतं काशोकथाश्र(ा?)वणकीर्तनादि यत् ।
शुभप्रदम्पापरं सुवासदं कृतञ्च शुद्धो मण्डपः सत्यमेव ॥ १३९ ॥

**काशीक्षेत्रप्रदक्षिणामहत्ववर्णनम्**

श्रीमहादेव उवाच

सभासदैर्देववरैरुक्तौ कुष्माण्डमण्डपौ ।
प्रदक्षिणीकृत्य तु तान् नमस्कृत्य पुनः पुनः ॥ १४० ॥
निष्पापौ हर्षसम्पन्नौ ययतुस्तौ स्वमालयम् ।
प्रदक्षिणाफलं ब्रह्मन् ! पञ्चक्रोशात्मकस्य च ॥ १४१ ॥
लिङ्गस्य दक्षिणा कार्या त्वया शिष्येण चाघहृत् ।
इति श्रुत्वा प्रसन्नात्मा जैगीषव्यो महामुनिः ॥ १४२ ॥
देवम्प्रदक्षिणीकृत्य नमस्कृत्य पुनः पुनः ।
जगाम पञ्चक्रोशस्य यात्रार्थं शिष्यसंयुतः ॥ १४३ ॥
पञ्चभिर्दिवसैः कृत्वा यात्रामत्राऽऽगतो मुनिः ।
उपदिष्टो विधिः सम्यक् यात्रायाः पापनाशनः ॥ १४४ ॥
महापुण्यकृदेवाऽपि निर्विघ्नम्फलदायकः ।
मुनिरागत्य विश्वेशं भवान्या सहितन्तदा ॥ १४५ ॥
पूजयामास विधिवदुपचारैः सुविस्तरैः ।
शिष्यो गुरुप्रसादेन निष्पापो (:?)पुण्यवान्सुधीः ॥ १४६ ॥
जातः स्कन्दप्रसादेन श्रुत्वा माहात्म्यमुत्तमम् ॥ १४७ ॥

श्रीमहादेवउवाच

एतत्तेऽभिहितन्देवि ! काश्यां यत्पातकंकृतम् ।
तस्य प्रणाशनं शुद्धं प्रायश्चित्तं सुदुर्लभम् ॥ १४८ ॥
श्रुत्वाऽध्यायमिमंपुण्यं सर्वपापप्रणाशनम् ।
नरःशुद्धिमवाप्नोति काशीवासञ्च गर्भहम् ॥ १४९ ॥

इति श्री ब्रह्मवैवर्त्ते तृतीयखण्डे काशीरहस्येपञ्चक्रोशयात्रामाहात्म्यवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

## अथैकादशोऽध्याय

### पञ्चक्रोशीयात्रानियमवर्णनम्

देव्युवाच

क्षेत्रप्रदक्षिणे देव ! नियमाःके भवन्ति तान् ।
वदस्व तारिताशेष विश्वनाथ ! कृपालय ! ॥१॥

महादेव उवाच

प्रतिग्रहं पराञ्च परदाराभिभाषणम् ।
परस्वग्रहणं स्नेहादसद्वार्ताञ्च वर्जयेत् ॥२॥
असताम्पापिनां सङ्गं न कुर्यात्प्रहितो नरः ।
असत्समागमात्सर्वं निष्फलञ्जायते नृणाम् ॥३॥
मम द्रोहपरैस्साकं न व्रजेद्विष्णुनिन्दकैः ।
परापवादन्नो कुर्यात्परद्रोहम्विवर्जयेत् ॥४॥
गुरुनिन्दां शास्त्रनिन्दां शिवधर्ममहात्मनाम् ।
तीर्थलिङ्गतपोनिन्दां न कुर्यात्तु प्रदक्षिणे ॥५॥
अन्यदा तु कृतम्पापं नश्येत् क्षेत्रप्रदक्षिणात् ।
क्षेत्र प्रदक्षिणामध्ये कृतं केन प्रणाश्यते ॥६॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवाऽन्त्यजातिभिः ।
काङ्क्षिभिः परमन्तत्त्वं कर्त्तव्या क्षेत्रदक्षिणा ॥७॥
किञ्चिद्दानद्दानंप्रत्यहं ब्राह्मणेभ्यो देयं दीनानाथम्पङ्ग्वन्धकेषु ।
भूमौ शय्यातैलमासादिदुष्टं सर्वम्वर्ज्यं क्षेत्रयात्रादिनेषु ॥८॥
मुक्तिमण्डपिकायाञ्च सम्विश्यवरवर्णिनि ! ।
प्रतिज्ञाम्महती कृत्वा पूजनन्तत्र तत्रह ॥ ९ ॥
काश्याम्प्रजातबाक्कायमनोजनितमुक्तये ।
ज्ञाताज्ञातविमुक्त्यर्थम्पातकेभ्यो हिताय च ॥ १० ॥
पञ्चक्रोशात्मकं लिङ्ग ज्योतो रूपं सनातनम् ।
भवानीशङ्कराभ्याञ्च लक्ष्मीश्रीशीवराजितम् ॥ ११ ॥

ढुण्ढिराजादिगणपैः षट्पञ्चाशद्भिरावृम् ।
द्वादशादित्यसहितं नृसिंहैः केशवैर्युतम् ॥ १२ ॥
रामकृष्णत्रययुतङ्कूर्ममत्स्यादिभिस्तथा ।
अवतारैरनेकैश्च युतम्विष्णोः शिवस्य च ॥ १३ ॥
गौर्यादिशक्तिभिर्युक्तं क्षेत्रङ्कुर्याम्प्रदक्षिणम् ।
बद्धाञ्जलिः प्रार्थयित्वा महादेवम्महेश्वरीम् ॥ १४ ॥

**पंचक्रोशीक्षेत्रप्रदक्षिणाक्रमवर्णनम्**

पञ्चक्रोशस्य यात्राम्वै करिष्ये विधिपूर्वकम् ।
प्रीत्यर्थन्तव देवेश ! सर्वाघौघप्रशान्तये ॥ १५ ॥
इति सङ्कल्प्य मौनेन प्रणिपत्य पुनः पुनः ।
ढुण्ढिराज ! गणेशान ! महाविघ्नौघनाशन ! ॥ १६ ॥
पञ्चक्रोशस्य यात्रार्थन्देह्याज्ञाङ्कृपया विभो ! ।
विश्वंशन्त्रिःपरिक्रम्य दण्डवत्प्रणिपत्य च ॥ १७ ॥
मोदम्प्रमोदंसुमुखन्दुर्मुखङ्गणनायकम् ।
प्रणम्य पूजयित्वाऽऽदौदण्डपाणिन्ततोऽर्चयेत् ॥ १८ ॥
कालराजञ्च पुरतो विश्वेशस्यजगद्गुरोः ।
पूजयित्वाततोगच्छेन्मणिकर्णीम्विधानतः ॥ १९ ॥
तत्र स्नात्वा महादेवम्मणिकर्णीशयर्चयेत् ।
विनायकं सिद्धदञ्च पुनरागत्य पूजयेत् ॥ २० ॥
मणिकर्णीतटच्छन्नं गङ्गाकेशवमच्युत ।
ललिताञ्च ततः पूज्य जरासन्धेश्वरम्विभुम् ॥ २१ ॥
सोमनाथं ततः पूज्य दालभेश्वरमेव च ।
शूलटङ्केश्वरन्देवमादिआदिवाराहमेवच ॥ २२ ॥
दशाश्वमेधलिङ्गं बन्दन्तत्रैव पूजयेत् ।
सर्वेश्वरञ्च केदारन्ततो हनुमदीश्वरम् ॥ २३ ॥
सङ्गमेशन्तत पूज्य लोलार्कम्पूजयेत्ततः ।
अर्कसंज्ञङ्गणाध्यक्षमसेस्तीरम्पुनर्व्रजेत् ॥ २४ ॥
क्षेत्रम्प्रदक्षिणीकुर्वंस्तिलमात्रन्न सन्त्यजेत् ।
दुर्गाकुण्डे ततः स्नात्वा यजेद्दुर्गविनायकम् ॥ २५ ॥
दुर्गासम्पूज्य विधिवद्वसेत्तत्र सुखाप्तये ।
ब्राह्मणान्भोजयेत्तत्र मधुपायसलड्डुकैः ॥ २६ ॥

रात्रौ जागरणन्तत्र पुराणश्रवणादिभिः ।
कुर्याच्च कीर्तनम्भक्त्या परोपकरणानि च ॥ २७ ॥
जय दुर्गे महादेवि ! जय काशिनिवासिनि ! ।
क्षेत्रविघ्नहरे ! देवि ! पुनर्दर्शनमस्तु ते ॥ २८ ॥
इति दुर्गाम्प्रार्थयित्वा विष्वक्सेनेश्वरन्ततः ।
पूजयित्वा कर्द्दमेशम्पञ्चव्रीहितिलैर्नमेत् ॥ २९ ॥
आदौ कर्दमतीर्थेतु स्नानङ्कूपावलोकनम् ।
सोभनाथम्विरूपाक्षं नीलकण्ठन्ततोऽर्चयेत् ॥ ३० ॥
तत्रवासम्विधायाग्नाऽग्नौ किञ्चिद्धोमं द्विजार्चनम् ।
श्राद्धादिकर्मकार्याणि कृत्वा मुच्येदृणत्रयात् ॥ ३१ ॥

### काशीक्षेत्रेपंचक्रोशस्यदेवानाम्वर्णनम्

कर्द्दमेश ! महादेव ! काशिवासिजनप्रिय ! ।
त्वत्पूजनान्महादेव ! पुनर्दर्शनमस्तु ते ॥ ३२ ॥
प्रातः स्नात्वा कर्दमेशम्पूजयित्वा च स(द्)द्विजान् ।
नागनाथञ्च चामुण्डाम्मोक्षेशङ्करुणेश्वरम् ॥ ३३ ॥
वीरभद्रन्ततो दुर्गां विकटाख्याम्प्रपूजयेत् ।
उन्मत्तभैरवन्नीलं कालकूटन्ततोऽर्चयेत् ॥ ३४ ॥
दुर्गाञ्च विमलान्नत्वा महादेवन्ततो व्रजेत् ।
नन्दिकेशम्भृङ्गिरिटिं तत्रैव च गणप्रियम् ॥ ३५ ॥
विरूपाक्षञ्च यज्ञेशम्विमलेश्वरमेव च ।
मोक्षदं ज्ञानदञ्चैवामृतेशन्तत्र पूजयेत् ॥ ३६ ॥
गन्धर्वसागरंतीर्त्वा भीमचण्डीन्ततो व्रजेत् ।
तत्र स्नात्वा भीमचण्डीम्पयसा स्नापयेत्सुधीः ॥ ३७ ॥
पञ्चोपचारैः सम्पूज्य ब्राह्मणान्परितोषयेत् ।
तत्र वासम्प्रयत्नेन कुर्याच्चण्डविनायकम् ॥ ३८ ॥
रविरक्ताक्षगन्धर्वन्नरकार्णवतारकम् ।
शिवं सम्पूज्य यत्नेन रात्रौ पूर्ववदाचरेत् ॥ ३९ ॥
प्रातरुत्थाय सुस्नातः प्रार्थयेद्भीमचण्डिकाम् ।
भीमचण्डि ! प्रचण्डानि मम विघ्नानि नाशय ॥ ४० ॥

नमस्तेऽस्तु गमिष्यामि पुनर्दर्शनमस्तु ते ।
ततो गच्छेदेकपादं गणङ्गत्वा सतण्डुलान् ॥ ४१ ॥
तिलांश्च विकिरेत्तत्र धनधान्यादिसम्पदे ।
ततो गच्छेन्महाभीमं भैरवम्भैरवीं शुभाम् ॥ ४२ ॥
भूतनाथञ्च सोमेशं पूजयेत्सिन्धुरोधसि ।
कालनाथङ्कपर्दीशम् कामेशञ्च गणेश्वरम् ॥ ४३ ॥
बीरभद्रञ्चारुमुखं गणनाथञ्च पूजयेत् ।
ततो गच्छेद्देहलीशम्विघ्नपूगनिबारणम् ॥ ४४ ॥
मोदकैः पृथुकैर्लाजैस्सक्तुभिश्चेक्षुपर्वभिः ।
पूजयेच्छ्रद्धयादेवन्तन्देहलीविनायकम् ॥ ४५ ॥
तत्पार्श्वे षोडशपुनर्विघ्ननाथान् समर्चयेत् ।
उद्दण्डगणपम्पूज्य उत्कलेश्वरमेव च ॥ ४६ ॥
रुद्राण्यास्तुतपो भूमिं दृष्ट्वा रामेश्वरम्व्रजेत् ।
वरणायान्ततः स्नात्वा तर्पणादि विधाय च ॥ ४७ ॥
रामेश्वरं श्वेततिलैर्बिल्वपत्रादिभिर्यजेत् ।
सोमनाथञ्च तत्रैव पूजयेदिन्द्रदिग्गतम् ॥ ४८ ॥
भरतेशं लक्ष्मणेशं शत्रुघ्नेश्वरमेव च ।
द्यावा भूमीश्वरं तत्र पूजयेन्नहुषेश्वरम् ॥ ४९ ॥
तत्र बासम्प्रकल्प्याऽथ पूर्ववज्जागरादिकम् ।
कृत्वा स्नात्वाऽपि रामेशम्प्रार्थयेत्काशिवासदम् ॥ ५० ॥
श्रीरामेश्वर ! रामेण पूजितस्त्वं सनातन ! ।
आज्ञान्देहि महादेव ! पुनर्दर्शनमस्तु ते ॥ ५१ ॥
लिङ्गानि सुबहून्यादौ वरणा पारगान्यथ ।
पूजयित्वा ततो गच्छेद्देवसङ्गनिषेवितम् ॥ ५२ ॥
देवसङ्गेश्वरे किञ्चिद्दत्त्वा स्थित्वा ततो व्रजेत् ।
पाशपाणिं गणेशञ्च क्षेत्रमध्ये व्यवस्थितम् ॥ ५३ ॥
पूजयित्वा वहिश्चैव पृथ्वीश्वरमथो यजेत् ।
एकोऽश्वमेधः पृथुना कृतः क्षेत्राद्वहिःपुरा ॥ ५४ ॥

### पंचक्रोश्यांदेवयात्रावर्णनम्

स्वर्गभूमिस्तु सा ज्ञेया मोक्षभूमिस्तु मध्यतः ।
काश्याश्चतुर्द्दिशं देवि ! योजनं स्वर्गभूमिका ॥ ५५ ॥

मृतास्तत्र तु गच्छिन्ति स्वर्गं सुकृतिनाम्पदम् ।
ततः सुयूपं हि सरः स्पृष्ट्वा गच्छेच्छनैः शनैः ॥ ५६ ॥
महत्क्षेत्रङ्कापिलन्तु यत्र श्रीवृषभध्वजः ।
तत्र स्नात्वा विधानेन तर्प्पयित्वा पितॄनथ ॥ ५७ ॥
श्राद्धम्विधाय सुश्रद्धः पूजयेद् वृषभध्वजम् ।
निवसेत्तन्तु दिवसं श्रवणादि प्रकल्पयेत् ॥ ५८ ॥
वृषभध्वज ! देवेश । पितॄणाम्मुक्तिदायक ! ।
आज्ञान्देहि महादेव ! पुनर्दर्शनमस्तु ते ॥ ५९ ॥
प्रदक्षिणीकृत्य ततो गच्छेज्ज्वालानृसिंहकम् ।
एवम्प्रदक्षिणीकृत्य सरः कापिलमुत्तमम् ॥ ६० ॥
चरणाञ्च ततस्तीर्त्वा स्नात्वा वै सङ्गमे शुभे ।
आदिकेशवमभ्यर्च्यं सङ्गमेश्वरमेव च ॥ ६१ ॥
बिनायकङ्खर्वसव्ज्ञम्पूजयित्वा ततो व्रजेत् ।
क्रोडीकृत्यवानशुद्धान्विकिरन्विष्णुमुच्चरन् ॥ ६२ ॥
प्रह्लादेश्वरसभ्यर्च्यं त्रिलोचनमतः परम् ।
विन्दुमाधवमध्यर्च्यं हृदे पञ्चनदे शुभे ॥ ६३ ॥
गभस्तीशं मङ्गलाञ्च गौरी दृष्ट्वा ततो व्रजेत् ।
वशिष्ठवामदेवौ च पर्वतेश्वरमेव च ॥ ६४ ॥
महेश्वरं समभ्यर्च्यं ततः सिद्धि विनायकम् ।
सप्तावरणगान्दिव्यान्पूजयेत् गणनायकान् ॥ ६५ ॥
मणिकर्ण्यान्ततः स्नात्वा गच्छेद्विश्वेश्वरं यती ।
नमस्कृत्य महेशानम्प्रविशेद्देवसन्निधौ ॥ ६६ ॥
पञ्चोपचारैः सम्पूज्य स्तुत्वा नत्वा पुनः पुनः ।
मुक्तिमण्डपभागत्य कृतार्थस्तत्र सम्विशेत् ॥ ६७ ॥
विष्णुञ्च दण्डपाणि च ढुण्ढिम्भैरवमेव च ।
आदित्यम्पञ्चगणपान्पूजयेत्पुनरेव च ॥ ६८ ॥
प्रदक्षिणीकृतान्देवान्स्मरेत्तत्र क्रमात्सुधीः ।
जय विश्वेश ! विश्वात्मन्काशीनाथ ! जगद्गुरो ! ॥६९॥
त्वत्प्रसादान्महादेव ! कृता क्षेत्रप्रदक्षिणा ।
अनेकजन्मपापानि कृतानि मम शङ्कर ! ॥ ७० ॥

गतानि पञ्चक्रोशात्मलिङ्गस्याऽस्यप्रदक्षिणात् ।
त्वद्भक्तिकाशीवासाभ्यां रहितः पापकर्मणा ॥७१॥
सत्सङ्गश्रवणाद्यैश्च कालो गच्छतु नः सदा ।
हर ! शंभो महादेव ! सर्वज्ञ ! सुखदायक ! ॥७२॥
प्रायश्चित्तं सुनिर्वृत्तं पापानान्त्वत्प्रसादतः ।
पुनः पापमतिर्मास्तु धर्मबुद्धिः सदाऽस्तु मे ॥७३॥

## पञ्चक्रोशीस्थितदेवानां वर्णनम्

इति जप्त्वा यथा शक्त्या दत्त्वा दानं द्विजन्मनाम् ।
बद्ध्वा करयुगम्मन्त्री मन्त्रमेतदुदीरयेत् ॥७४॥
पञ्चक्रोशस्य यात्रेयं यथा शक्त्या मया कृता ।
न्यूनं सम्पूर्णतां यातु त्वत्प्रसादादुमापते ! ॥७५॥
इति प्रार्थ्यं महादेवं गच्छेद्गेहं स्वकं स्वकम् ।
न्यूनातिरिक्तदोषाणाम्परिहाराय दक्षिणाम् ॥७६॥
सङ्कल्प्य गत्वा च गृहं ब्राह्मणान्भोजयेत्ततः ।
तत आगत्य च गृहं कुटुम्बैः सह भोजनम् ॥७७॥
कृतात्मानन्ततो ध्यायेत् कृतकृत्यो भवेत्ततः ।
एक रात्रन्तु मध्येयः प्रवसेच्छुचिमानसः ॥७८॥
वरणायास्तटे रम्ये स याति परमाङ्गतिम् ।
द्विरात्रमध्येवसति यः कुर्याद्धर्मतत्परः ॥७९॥
प्रथमं चण्डिकाक्षेत्रे द्वितीयम्वरणातटे ।
दिवसन्तु वसेद्धीमांस्ततो विश्वेश्वरम्व्रजेत् ॥८०॥
यस्तुत्रिरात्रमुषितो मध्ये भवति पार्वति ! ।
दुर्गालये भीमचण्ड्यां रामेशे वासमृच्छति ॥८१॥
वसति यस्तु कुरुते मध्ये दिनचतुष्टयम् ।
प्रथमाम्वसतिङ्कुर्यात्कर्दमेश्वरेसन्निधौ ॥८२॥
द्वितीयाम्भीमचण्ड्यान्तु रामेशे तु तृतीयकाम् ।
चतुर्थीङ्कापिले तीर्थे वसती(ति)म्परिकल्पयेत् ॥८३॥
राजवृद्धकुमाराणां यथेष्टम्वासइष्यते ।
यथाकथञ्चिद्देवेशि पञ्चकोशप्रदक्षिणाम् ॥८४॥

कुर्वदिव न मासादि चिन्तयेद्धर्मकोविदः ।
स एव शुभदःकालो यस्मिञ्छ्रद्धोदयो भवेत् ॥८५॥
श्रद्धा हि दुर्लभा लोके कलौ खलु विशेषतः ।
श्रद्धैव तीर्थन्देवश्च श्रद्धा स्वर्गापवर्गकौ ॥८६॥
श्रद्धया यत्कृतंसर्वमनन्तफलदम्भवेत् ।
सत्ये श्रद्धा गुणवती नासत्ये सा फलप्रदा ॥८७॥
काश्यां तिष्ठति यो नित्यं स्नाति भागीरथीजले ।
कुर्यात्साम्वसरीं यात्रां पञ्चक्रोशस्यसुन्दरि ! ॥८८॥
स ब्रह्मभूतो निवसेन्ममाऽनुग्रहतः सुखी ॥८९॥

इकि श्रीब्रह्मवैवर्त्ते तृतीयखण्डे काशीरहस्ये पञ्चक्रोशयात्रावर्णने दशमोऽध्यायः ।९।

# अथ दशमोऽध्यायः

## पञ्चक्रोशीमुद्दिश्य श्रीदेवीप्रश्नम्प्रति शिवोत्तरवर्णनम्

श्रीदेव्युवाच

देव ! देव महादेव ! वेदविद्याविशारद ! ।
यथा प्रदक्षिणाकार्या मनुजैर्विधिपूर्वकम् ॥ १ ॥
स्थानम्वासस्य वद नो भक्ष्यं चाऽभक्ष्यमेव च ।
पूजां सीम्निस्थितानाञ्च देवानां दानमेव च ॥ २ ॥
यथा सम्पूर्णतामेति यात्राक्षेत्रस्य सत्तम ! ॥ ३ ॥

शिवउवाच

शृणुदेवि ! महाभागे ! सबलोकोपकारकम् ।
तद्ब्रवीमि महेशानि ! यथावद्विधिपूर्वकम् ॥ ४ ॥
पञ्चक्रोशस्य यात्राया विधिः सम्यगुदीर्यते ।
श्रुत्वा मनुष्यो येनाऽऽशु निष्पापः पुण्यवान् भवेत् ॥ ५ ॥
आश्विनादिषु मासेषु त्रिषु पार्वति ! सर्वदा ।
प्रदक्षिणा प्रकर्तव्या क्षेत्रस्याऽपापकाङ्क्षिभिः ॥ ६ ॥
माघादिचतुरो मासाः प्रोक्ता यात्राविधौ नृणाम् ।
पूर्वस्मिन्दिवसे ढुण्ढिम्पूजयित्वा हविष्यभुक् ॥ ७ ॥
प्रातरुत्तरवाहिन्यां स्नात्वा विश्वेशमर्चयेत् ।
पुनर्यात्रार्थमपि च शिवयोः पूजनम्भवेत् ॥ ८ ॥
माषान्नञ्च मसूराश्च चणकान्कोद्रवांस्तथा ।
ताम्बूलम्मैथुनञ्चैव भोगानन्याञ्च वर्जयेत् ॥९॥
स्नानद्वयम्प्रकुर्वीत नित्यश्राद्धञ्च सुन्दरि ! ।
यदत्र किञ्चित्क्रियते कोटिकोटिगुणम्भवेत् ॥१०॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ मस्करी ।
क्षेत्रे वसन्बहिर्वाऽपि कुर्यादेव प्रदक्षिणाम् ॥११॥

ब्रह्महत्यादिपापानां प्रायश्चित्तन्नचाऽपरम् ।
बहिष्कृतानाम्पापानां मध्ये वाऽपि सुरेश्वरि ॥१२॥
प्रायश्चित्तान्तरम्पुंसो न दृष्टं न मया श्रुतम् ।
सन्ति देवाश्च बहवः स्वर्गभूमौ बहिः सदा ॥१३॥
मदाज्ञान्नलभन्त्येव वासार्थं दैन्यमागताः ।
बहिः स्थिताः प्रकुर्वन्ति दक्षिणं क्षेत्रलब्धये ॥१४॥
ममानुग्रहकामैश्च पञ्चक्रोशात्मकम्प्रिये ! ।
लिङ्गम्प्रदक्षिणीकृत्य द्रष्टव्योऽहं कृपानिधिः ॥१५॥
यस्मिन्क्षेत्रे महादेवि ! पुण्यम्पुण्यतरन्तु वा ।
अनन्तकोटिगुणितं भवेत्सर्वं न संशयः ॥१६॥
अन्तर्गेहे कृतम्पापं केवलं यातनागृहम् ।
अन्यक्षेत्रे कृतम्पापं पुण्यक्षेत्रे विनश्यति ॥१७॥
पुण्यक्षेत्रे कृतम्पापं वाराणस्यां विनश्यति ।
वाराणास्यां कृतम्पापमन्तर्गेहे विनश्यति ॥१८॥
अन्तर्गेहे कृतम्पापं वज्रलेपो भविष्यति ।
वज्रलेपच्छिदे ह्येतत्पञ्चकोशप्रदक्षिणम् ॥१९॥
तस्मात्सर्वप्रयत्नेन कुर्यात्क्षेत्रप्रदक्षिणाम् ।
वाराणसीन्तु सम्प्राप्य प्रमादाद्यो बहिर्गतः ॥२०॥
दैवात्स पुनरागत्य दक्षिणेन प्रशुध्यति ।
अविमुक्तं महाक्षेत्रं सर्वदा जननी यथा ॥२१॥
पुत्रस्य जननी लोके सर्वदा हितकारिणी ।
हितकृत्सर्वजन्तूनां काशीहाऽमुत्र सिद्धिदा ॥२२॥

श्रीदेव्युवाच

भगवन्सर्वभूतेषु कृपापूरितविग्रह ! ।
कृताच्र्यानाम्वद विभो ! क्षेत्रसंन्यासिनामपि ॥ २३ ॥
प्रदक्षिणक्रमं क्षेत्राद्बहिर्वा मध्यतोऽपिवा ।
नियमस्य न भङ्गः स्याद्यथा पापञ्च नश्यति ॥ २४ ॥
देहिनाम्पापसम्बन्धः सर्वदा जायते क्रमात् ।
तत्काशिवासिनां नश्येत् क्षेत्रसंन्यासिनान्तथा ॥ २५ ॥

पञ्चक्रोशस्य यात्रायां शक्तिर्येषां न विद्यते ।
तेषाम्पापं कथं नश्येत् क्षेत्रपापकृतां सताम् ॥ २६ ॥

श्रीभगवानुवाच

सम्यक् पृष्टन्त्वया देवि ! महाहङ्कारनाशनम् ।
प्रायश्चित्तं न्यासिनां हि क्षेत्राघौघविनाशनम् ॥ २७ ॥
विधिस्तु पूर्वमेवोक्तो नियमादियुतस्तव ।
प्रदक्षिणक्रमस्तेषामवधारय सुव्रते ॥ २८ ॥

**क्षेत्रसन्यासिनाकृतेप्रदक्षिणाक्रमवर्णनम्**

स्नात्वा देवं समभ्यर्च्य विश्वेशम्बिम्बया सह ।
मोदादिपञ्चकण्ढुण्ढि दण्डपाणिञ्च भैरवम् ॥ २९ ॥
पूर्ववत्तीरगान्पूज्य दुर्गां सम्पूज्य यत्नतः ।
बहिरावरणन्त्यक्त्वा गणेशानान्तु सप्तकम् ॥ ३० ॥
मध्ये प्रदक्षिणङ्कुर्यादसिवरणयोः कृती ।
सम्मुखीभूय विधिवत्पूजयेच्चाऽग्रतःस्थितान् ॥ ३१ ॥
देवा देव्यश्च फलदाः क्षेत्रपालाः प्रयत्नतः ।
एकरात्रं द्विरात्रम्वा वसेन्मध्ये त्रिरात्रकम् ॥ ३२ ॥
यत्र श्रद्धा सुमहती वसेत्तत्र न संशयः ।
प्रत्यहं दण्डपाणेस्तु पूजा कार्या प्रयत्नतः ॥ ३३ ॥
दण्डपाणेः पूजनेन सिद्धा भवति नान्यथा ।
दण्डपाणे ! यक्षपते ! क्षेत्रसंन्यासिवल्लभः ! ॥ ३४ ॥
पञ्चक्रोशस्य यात्रेयं सिद्धा मे त्वत्प्रसादतः ।
आगत्य विश्वनाथस्य पूजा कार्या च पूर्ववत् ॥ ३५ ॥

देव्युवाच

प्रत्यहं दण्डपाणेस्तु पूजा प्रोक्ता विशेषतः ।
किमेतद्वद देवेश ! यात्रामुद्दिश्य शङ्कर ! ॥ ३६ ॥

श्रीभगवानुवाच

काशीम्प्राप्य बहिर्नैव गच्छेत्सर्वात्मना क्वचित् ।
मन्मुखात्सम्यगाश्रुत्य क्षेत्रसन्न्यासकृत्तमः ॥ ३७ ॥
दण्डपाणिः समभवत्तदारभ्य वरानने ! ।
कालान्तरे तदा देवि ! ऋषिभिर्नारदादिभिः ॥ ३८ ॥

## क्षेत्रप्रदक्षिणाक्रमवर्णनम्

पृष्टोऽहं क्षेत्रजनितपापनाशनमद्भुतम् ।
तदा सुदुर्लभन्देवि ! प्रायश्चित्तम्मया महत् ॥ ३९ ॥
उपदिष्टम्मल्लिङ्गं प्रदक्षिणमशेषतः ।
तच्छ्रुत्वा पृष्टवान् दण्डपाणिः क्षेत्रपरायणः ॥ ४० ॥
तदामयोपदिष्टोऽसौ महापाशुपतः कृती ।
क्षेत्रयात्रा द्वितीया मे मयोक्ता दण्डपाणये ॥ ४१ ॥
ततो दण्डपतेःपूजा कर्तव्या पूर्तिकारिणी ।
पञ्चक्रोशात्मकस्यैव लिङ्गस्य परमात्मनः ॥ ४२ ॥
प्रदक्षिणत्रयं कृत्वा जीवन्मुक्तो भवेन्नरः ॥

देव्युवाच

ज्ञात्वाऽपि श्रद्धया देव ! न कुर्वन्ति प्रदक्षिणम् ॥ ४३ ॥
तत्केन हेतुना मर्त्या उपक्षन्ते महाफलम् ॥

श्रीभगवानुवाच

श्रद्धापुण्यवतां देवि ! न पाण्डित्यादिभिस्सदा ॥ ४४ ॥
यस्माद्धर्मे प्रयततां सिध्येत्सर्वन्न चाऽन्यतः ॥ ४५ ॥
यत्र यत्र परिरज्यते जनस्तत्र तत्र सुखमेधते पुनः ।
साधनानि विदधाति'तत्परो येन तत्फलमवाप्नुयान्नरः ॥ ४६ ॥
लौकिके परमवैदिकेऽथ वा पामरः परमतत्त्ववित्तथा ।
मोदकः परममोदको यथा दीयते कपटभार्यया यथा ॥ ४७ ॥
मोहितो नहि विचारयत्ययं जीवनम्मरणमप्यहोऽवशी ।
एकमेकं कालकूटमिन्द्रियन्नाशकृत्पुनः ॥ ४८ ॥
तदेवशोधितं यद्वद्विपमप्यंमृतम्भवेत् ॥ ४९ ॥
जगत्तृणीकृत्य स कालमृत्युं स्वात्मानमामोज्य शिवेन योगैः ।
अविघ्नमेवं समलम्विसृज्य शरीरसंज्ञम्मलखण्डभाण्डम् ॥ ५० ॥
मुक्तो भवेदेष नचाऽन्यथैव मर्त्यः प्रसादादपि ते विरक्तः ।
कः कर्तुमेवम्प्रभवत्यविघ्नं कलौ मनुष्यो बहुदोषयुक्तः ॥ ५१ ॥
तथापि मुक्तो भविता यदि त्वां भजत्यभीक्ष्णं सकलैश्चभावैः ।
पूर्वोदितो दुर्मतिदर्शकोऽयं विमोहनार्थैरखिलैश्च शास्त्रैः ॥ ५२ ॥

वीभत्सिते दुर्विपहे कदाचिद्यो वाऽनुरागो भविता नरस्य ।
स चेद्भविष्यत्परमात्मनीशे को नाममुक्तो न भवेद्भवाब्धेः ॥ ५३ ॥
अविमुक्तम्ममक्षेत्रमविमुक्तं । सदा शिवम् ।
अविमुक्तजनं शान्तं सेवन्ते ये धृतव्रताः ॥ ५४ ॥
विमुक्ताः परमानन्दे पदे स्थितिमुपागताः ।
अनेकजन्मसुमहत्साधनैर्ज्ञानमुत्तमम् ॥ ५५ ॥
प्राप्नुवन्ति तदैकेन जन्मना साधुवासिनः ।
अष्टाङ्गादिभिरन्यैश्च तपोमोक्षादिभिः सदा ॥ ५६ ॥
सावितैः पाक्षिकीसिद्धिरविमुक्ते निरर्गला ।
अविमुक्तात्परो योगो ज्ञानन्दानं जपस्तपः ॥ ५७ ॥

**क्षेत्रसन्यासकृतां प्रदक्षिणाक्रमवर्णनम्**

क्षेत्रन्यासं दृढङ्कृत्वा वसेद्धर्मपरः सदा ।
क्षेत्रन्यासपराणान्त्वमहमप्यनुकामजैः ॥ ५८ ॥
भोगैः सहायतां यातो दिशावः परमाङ्गतिम् ।
यथा पतिव्रता भार्या भर्तारमनुगच्छति ॥ ५९ ॥
तथा साहसमालम्ब्य काशीमनुगतो भवेत् ।
गुरुद्रोहरतो यस्तु विप्रद्रोहपरस्तथा ॥ ६० ॥
न तस्य काशी सिध्येत बहुभिः साधनैर्युतः ।
क्षेत्रसन्न्यासिनामेवं क्रमः प्रोक्तो मयानघे ॥ ६१ ॥
प्रदक्षिणाया माहात्म्यं महापापहरं शुभम् ॥ ६२ ॥

इति श्रीब्रह्मवैवर्त्ते तृतीयखण्डे काशीरहस्ये क्षेत्रसंन्यासिनाम्प्रदक्षिणामाहात्म्यवर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥

●

# अथ द्वादशोऽध्यायः

## अशक्तानांकृते स्वल्पायाससाध्यप्रायश्चित्तवर्णनम्

देव्युवाच

देव! देव! महादेव! सन्देहो नाशितस्त्वया।
किञ्चित्प्रष्टव्यमस्तीह प्रायश्चित्तविनिर्णये॥ १॥
पङ्गवः शक्तिरहिता रोगग्रस्ता धनैर्युताः।
काश्याम्पापकृतः पश्चात् प्रायश्चित्ताद्यभीप्सवः॥ २॥
कथन्तेषामथो शुद्धिर्धनिनां काशिवासिनाम्।
सुकुमारशरीराणां राज्ञा स्त्रीसमवायिनाम्॥ ३॥
वद तेषां यथा शुद्धि यातनाविनिकृन्तनीम्॥ ४॥

महादेवउवाच

श्रुणु देवि! रहस्यम्मे धर्मः सूक्ष्मो भवेत्सदा।
न जानन्ति स्थूलधियो विषयाशक्तमानसाः॥ ५॥
स्वल्पद्रव्येण च महान्महताऽप्यणुमात्रकः।
देशङ्कालं तथा पात्रं वित्तं श्रद्धादिकम्महत्॥ ६॥
करोति सुविचार्याऽऽशु येन काशी प्रसीदति।
मम क्षेत्रे तु धनिनः पापिष्ठाः शुद्धिकाङ्क्षिणः॥ ७॥
देवालयस्तैः कर्त्तव्यो महापातकनाशनः।
महापुण्यप्रदश्चैव महासुखकरस्तथा॥ ८॥
यत्र तिष्ठति निर्विघ्नं शिवलिङ्गम्वरानने!।
तत्र देवालयः कार्यः पूजा भवति यत्र च॥ ९॥

## सप्रासादशिवलिङ्गस्थापनमहत्ववर्णनम्

शिवलिङ्गस्थापकानां शिवप्रासादकारिणाम्।
यान्ति नाशम्विना क्लेशैः पातकानि महान्त्यपि॥ १०॥
शिवलिङ्गप्रतिष्ठां यः कुर्यात्पापशतान्वितः।
पातकानि विनश्यन्ति तस्य सोऽश्रोऽप्यदूरतः॥ ११॥

काश्याङ्कृतानां पापानामेकम्पापप्रमोचनम् ।
विष्णुर्मूर्त्तिप्रतिष्ठा च कार्या मोक्षप्रदायिनी ॥ १२ ॥
ब्राह्मणश्च तथा स्थाप्यो गृहोपस्करदानतः ।
कुटुम्बी विष्णुभक्तश्चाऽप्यग्निसेवापरायणः ॥ १३ ॥
कलौ देवालयस्याऽपि रक्षा देवि ! सुदुर्लभा ।
लिङ्गरक्षा तथा शम्भोर्नित्यपूजाऽपि नो भवेत् ॥ १४ ॥

देव्युवाच

क्षेत्रपापकृताम्पापं नश्यत्येव न संशयः ।
अन्यत्राऽपि कृतम्पापं नश्यत्येव न संशयः ॥ १५ ॥
अन्यान्यपि च पापानि नश्यन्ति नहि संशयः ।
प्रासादकरणाल्लिङ्गस्थापनात्पूजनात्प्रभोः ॥ १६ ॥
पापनाशः कियानर्थो निर्वाणमपि जायते ।
परं सविघ्नता तत्र त्वयोक्ता विघ्ननाशनः ॥ १७ ॥
ततोऽपि किञ्चित्सुमहदस्ति चेद्वद शङ्कर ! ॥ १८ ॥

महादेवउवाच

शृणु देवि ! रहस्यम्मे कृपणेषु न तद्वदेत् ।
अश्रद्धे दूषितमतौ पापाभीरौ न नास्तिके ॥ १९ ॥
श्रद्धालवे वदान्याय पापत्रस्ताय साधवे ।
ब्रूयाद्रहस्यम्परमं यथा धर्मः सुसिध्यति ॥ २० ॥
वाराणस्याङ्गृहं कृत्वा ब्राह्मणाय प्रयच्छति ।
सिद्धाय वेदविदुषे शिवविष्णुप्रियाय च ॥ २१ ॥
विवेकिने महाविद्यायुक्ताय प्रियवादिने ।
दातव्यमेव सुगृहं कारयित्वा विशेषतः ॥ २२ ॥
काश्याङ्कृतानाम्पापानां कायवाङ्मनसांखलु ।
नाशः परोऽयं सन्दिष्टः शुभकृद्यदि लभ्यते ॥ २३ ॥
गृहदानाद्भवेन्मुक्तो वंशवृद्धिस्तथाऽक्षया ।
अर्थकामादिकं सर्वमाप्नोति गृहदानतः ॥ २४ ॥
व्ययीकृत्वा धनङ्किंचिदत्र कृत्वा भुवंशुभाम् ।
गृहमुत्थाप्य यो दद्यात्स याति परमम्पदम् ॥ २५ ॥

माम्विना कः प्रयच्छेत काश्याम्भूमिं द्विजाय हि ।
तस्मान्मदंशः स प्रोक्तो गृहदाता न संशयः ॥ २६ ॥
उपपातकलक्षाणि महापापशतानि च ।
विलयं यान्ति सर्वाणि क्षेत्रमध्यकृतान्यपि ॥ २७ ॥
दानन्तस्मादिदं श्रुत्वा मनसि ह्यवधार्य च ।
द्विजायाऽऽर्त्ताय सन्दद्याद्विक्रीयाऽऽत्मानमप्यहो ॥ २८ ॥
अत्र ते वर्णयिष्यामि कथाम्परमदुर्लभाम् ।
त्रिलोचनसमीपे तु क्षत्रियः सूर्यवंशजः ॥ २९ ॥
महातेजेतिविख्यातो व्यापारनिरतः सदा ।
हिरण्यम्बहुलन्तस्य जातङ्कार्पण्यनीरघेः ॥ ३० ॥
क्रयविक्रयदोषेण कार्पण्यम्वृद्धिमाययौ ।
यथाकथञ्चिद्दम्भेन पापेन धनतत्परः ॥ ३१ ॥
तस्य भार्या मृता दैवाद्गृहदासीरतोऽभवत् ।
स्वाधीनं साधनङ्कृत्वा ब्राह्मणेभ्यः प्रयच्छति ॥ ३२ ॥
कुटुम्बेन परित्यक्तस्तथा सद्भिरपि प्रभुः ।
वणिग्वृत्त्युपजीवी स साध्वसाधुविगर्हितः ॥ ३३ ॥
अन्यान्यपि च पापानि मध्ये मध्ये करोति च ।
एकदा वल्लभा तस्य दासी धर्मकथापरा ॥ ३४ ॥
जाता धर्मव्यसनिनी पुत्रादिपरिवर्जिया ।
पतिम्विज्ञापयामास पुत्रार्थं यत्रवान्भव ॥ ३५ ॥
न शृणोति स पापात्मा धनव्ययभियाऽसकृत् ।
प्रार्थितोऽपि तथा दास्या सुधर्मयुतया तया ॥ ३६ ॥

**तत्रविषये महातेजाक्षत्रियोपाख्यानवर्णनम्**

एकादा मानिनी भूत्वा सुप्ता दुःखितमानसा ।
किमनेन वराकेण सदा धनरतेन च ॥ ३७ ॥
विश्वेशवासभूमौ हि सदा धनमनास्त्वयम् ।
न पुत्रो नच कन्याऽस्य पौत्रा दौहित्रकादयः ॥ ३८ ॥
कथम्भवन्ति वितता वंशवल्ल्यः फलान्विताः ।
एवं विचारयेद्यावत्सा दासी धर्मतत्परा ॥ ३९ ॥

कथं धर्मंपरोऽयंस्यात्तावल्लोका विचुक्रुशुः ।
अहो कदर्यः पापात्मा गच्छत्ययममर्षितः ॥ ४० ॥
इति लोकमुखाच्छ्रुत्वा सुप्ता सा तु ततः शुचा !
श्रुत्वा श्रुत्वा ब्राह्मणेभ्यो ज्ञातन्धर्मस्य कारणम् ॥ ४१ ॥
दानमेव परं श्रेयः काश्यान्तत्तु विशेषतः ।
इति भूमौ पतिम्वा सा चिन्तयन्ती सुदुःखिता ॥ ४२ ॥
आगतो धनदृक्स्वामी दृष्ट्वा गेहममार्जितम् ।
अलिप्तमग्निना शून्यं व्यवहारसुवर्जितम् ॥ ४३ ॥
व्यग्रोऽवदत्कथं सुप्ता न भोक्तव्यम्मयाऽधुना ।
त्वयाऽपि सुखदायिन्या भुज्यते सुप्यते सुखम् ॥ ४४ ॥

दास्युवाच

गृहकार्यङ्कारयतु नहि शक्ता रुजार्दिता ।
न भोक्तव्यम्मया किञ्चित् भोजने धनसङ्क्षयः ॥ ४५ ॥

महातेजाउवाच

भुज्यते प्रत्यहङ्किन्न कथमद्य धनक्षयः ।
भविष्यति वरारोहे ! धनक्षयकथां श्रृणु ॥ ४६ ॥
धृतं न भुज्यतेऽस्माभिर्नं मिष्ठान्नं न शर्करा ।
न पायसं न तैलादि पक्वं नश्यति किं धनम् ॥ ४७ ॥
इति श्रुत्वा वचस्तस्य दुःखिता घूर्णताङ्गता ।
उत्थाय चाऽऽह धिग्धिक् त्वां पापं सद्भिर्विगर्हितम् ॥ ४८ ॥
विषम्पीत्वा जलेवार्ऽपि त्यक्ष्ये जीवितमात्मनः ।
असत्सङ्गसमुद्भूतं कथम्पापमहन्तरे ॥ ४९ ॥
अहन्दासी यथा वेश्या बहुभि' किं न मर्दिता ।
ज्ञात्वा माङ्गच्छसे पाप ! कथन्त्वत्तोऽधमःपरः ॥ ५० ॥
त्वं क्षत्रियः कुलीनश्च मत्सङ्गात्सद्भिर्गर्हितः ।
अतः परमहम्पाप ! त्वत्सङ्गान्नरके पतेः ॥ ५१ ॥
न स्वधर्मेषु निरतो न दानव्रततत्परः ।
क्षत्रियाणाम्परय गृहे ब्राह्मणा भुञ्जतेऽनिशम् ॥ ५२ ॥
न ते पुत्रा न ते पौत्रा दौहित्रा भ्रातरोऽथवा ।
धनङ्कस्योपकाराय सञ्चितं धर्मवर्जितम् ॥ ५३ ॥

महातेजाउवाच

त्वन्नजानासि धनजं सुखं सौ भाग्यगर्विता ।
मूषका अपि सञ्चित्वा भुञ्जते सुखमुत्तमम् ॥ ५४ ॥
धनव्ययकरा ये तु शत्रवस्ते मता मम ।
कैश्चित्सङ्गं न कुर्याद्धि तैर्जनैर्व्ययतत्परैः ॥ ५५ ॥
धनव्ययकृतो मूर्खाः सीदन्ति धनशापतः ।
अतो मया त्वं भार्यात्वें रक्षिता न कुलाङ्गना ॥ ५६ ॥
तस्याःपुत्रादयो द्रव्यं व्ययं नेष्यन्ति मामकम् ।
त्वं दासी मम वित्तस्य रक्षणं स्याद्यथा कुरु ॥ ५७ ॥
त्वत्प्रसादान्न बहुशः कुटुम्बम्परिपृच्छति ।
न पुत्रा व्ययकर्तारो न भार्या धननाशिनी ॥ ५८ ॥
निस्तीर्णोऽस्मि त्वया भद्रे धनरक्षाऽपि जायते ।
अतः परन्त्वमुत्तिष्ठ माषान्नम्परिभज्य च ॥ ५९ ॥
देहि मुष्टिद्वयन्तावद्यावदन्नं शनैर्भवेत् ।
इति श्रुत्वा तु सा दासी धर्मश्रवणतत्परा ॥ ६० ॥
तूष्णीमास सुदुःखार्ता न च किञ्चिदुवाच ह ॥ ६१ ॥

**महातेजसः दास्या सहसंवादवर्णनम्**

महातेजाउवाच

प्रिये ! कथम्मानवती जाताऽसि प्रियवादिनी ।
कथयिष्यसि यद्यत्त्वं तत्तकुर्याम् न संशयः ॥ ६२ ॥

दास्युवाच

मया चेत्तव कृत्य स्यान्कदुक्तङ्कुरु नायक !।
यत्र धर्मकथा विष्णोः शिवस्य च परा भवेत् ॥ ६३ ॥
तत्र तत्र त्वया भद्रा श्रोतव्या प्रत्यहं सदा ।
तदा त्वदुक्तं न मया लङ्घनीयङ्कदाचन ॥ ६४ ॥
श्रुत्वा कथां यतस्वाऽऽशु स्वव्यापारार्थमादरात् ॥ ६५ ॥

महातेजाउवाच

अवश्यमेव श्रोतव्या कथा धर्ममयी मया ।
विरुद्धमेकमेवाऽस्ति दातव्यं किञ्चिदेव हि ॥ ६६ ॥

तव भ्रान्तिः कुतो जाता श्रवणे धनहानिदे ।
गम्यते न मया क्वाऽपि धनव्ययभिया प्रिये ॥ ६७ ॥
तव स्नेहादगमिष्यामि सहसा सुखदायिनि ! ।
इति श्रुत्वा तया प्रोक्तो गच्छ धर्मकथां शृणु ॥ ६८ ॥
तावद्भोजनसामग्रीं करोमि मधुरान्तव ।
इत्यादिष्टस्तया दास्या गतः श्रोतुं कथां हरेः ॥ ६९ ॥
त्रिलोचनसमीपे तु यत्र सन्मडली शुभा ।
तत्र गत्वा महातेजा ह्यपविष्टः सुदूरतः ॥ ७० ॥
अद्य किं देवयात्रार्थं श्रवणार्थं समागतः ।
महातेजो महातेजो महातेजः समागतः ॥ ७१ ॥
इत्युच्चैर्व्याहृतं लोकैः सोपहासं महात्मभिः ।
ततो धर्मकथा स्पष्टा पुण्यदा पापनाशिनी ॥ ७२ ॥
प्रवृत्ता सर्वलोकानामानन्दरसगर्भिणी ।

काश्याम्वसेद्धर्मपरो महात्मा न वित्त कामादिपरः कदाचित् ।
वित्तं पुरादैवकृतन्तु यावत्तावद्भवत्येव न चाऽत्र वादः ॥ ७३ ॥
धर्मोहिमूलम्भवति प्रसिद्धं पुरातनोऽन्यो विभवो विनश्वरः ।
ये धर्मकामास्त इमे सौख्यपूर्णा ये चार्थकामास्त इमे दुःखपूर्णाः ॥ ७४ ॥
अर्थार्थिनः कामसुखेऽपि निस्पृहाः कुतः पुनर्द्धर्मसुखम्परञ्च ।
धनव्ययाद्बिभ्यति पापसञ्चका धनव्ययो धनिनाम्मृत्युहेतुः ॥ ७५ ॥
अहर्निशं धनतृष्णा विहाय योगक्षेमी यावता कल्पयेत ।
ततोऽधिकम्पापसमूहवृद्धये भवत्यजस्रं धनिनां तद्धनं हि ॥ ७६ ॥
अहर्निशं धर्मपरो लभेत सुखं स्वर्गमपवर्गम्विरागम् ।
स्तुतो महद्भिः कुरुते धर्मपुञ्जं मत्वा पुरः स्वात्महितं सदैवतम् ॥ ७७ ॥

इति श्रुत्वा वचस्तेषाम्महताम्भावितात्मनां ।
कथान्ते च महातेजा गतः शून्यं निजालयम् ॥ ७८ ॥
तस्मिन्दिने तया दास्या न कृता पक्तिरन्नजा ।
तस्य सत्त्वपरीक्षार्थं श्रुत्वा धर्मकथा न वा ॥ ७९ ॥
तावत्स आगतो गेहं स्नानार्थं पृष्टवाञ्जलम् ।
उष्णोदकेन स स्वामी स्नापितः सतया पुनः ॥ ८० ॥

भुङ्क्ष्वेति प्रार्थितः सिद्धमन्नं सम्पादितम्मया ।
स तूष्णीमास सङ्कोचान्न तां किमपि चोक्तवान् ॥ ८१ ॥

**महातेजसः क्षत्रियस्याऽऽख्यानवर्णनम्**

सिद्धमन्नं कथन्स्वामिन्भुज्यते न त्वयाऽधुना ।
ततो धनादिचर्चा ते कर्तव्या वर्तते बहु ॥ ८२ ॥

महातेजाउवाच

अपराधम्मम नचेद् गृहासि स्वामीवल्लभे ! ।
स्वहस्तेन मया कार्या पङ्क्तिः शुद्धा वदाऽऽशुतत् ॥ ८३ ॥

दास्युवाच

किमानेयं मया स्वामिन्पाकार्थे वद तत्तथा ।
माषचूर्णादि यत्किञ्चिदुच्यतां शीघ्रमस्तिमे ॥ ८४ ॥

स्वाम्युवाच

हविष्यं स्वादु यत्किञ्चिद्भूवेद्वेश्मनिहृत्प्रियम् ।
तदानय महाभागे येन तृप्यन्ति सुद्विजाः ॥ ८५ ॥

तया हृदि बिचार्यैव न चोक्तं किमपि प्रियम् ।
आनीय कारिता पंक्तिस्तया धर्मदृशा यथा ॥ ८६ ॥

भुङ्क्ष्वेति स तयोक्तस्ताम्प्राह स्वामी सुदासिकाम् ॥ ८७ ॥

कथम्विनाऽतिथिम्भुक्षे तस्मादानय कञ्चन ।
सा गता तु बहिर्द्वारम्पश्यन्ती भिक्षुकान्बहून् ॥ ८८ ॥

आहूयमाना नाऽऽयान्ति भिक्षुकाः पात्रपाणयः ।
वदन्ति महतामन्नं त्यक्त्वा दासीपतेः कथम् ॥ ८९ ॥

भुज्यते चाऽन्नमस्माभिः काश्यामवार्धुषिकस्य च ।
कृपणान्नं तु यो भुङ्क्ते स भुङ्क्ते तस्य किल्बिषम् ॥ ९० ॥

इति श्रुत्वा भिक्षुमुखात्तया सर्वं निवेदितम् ।
स्वामिने स्वाम्यपि तदा लज्जितो दुःखितो ह्यभूत् ॥ ९१ ॥

भोक्तुम्प्रवृत्तः स तदा मार्जारानाह्वयत्यहो ! ।
तेऽपि नाऽऽयान्त्यनभ्यासात्ताडयिष्यति नः पुनः ॥ ९२ ॥

मार्जाराणां शुनाम्वृत्तिर्नीयते न कदाचन ।
काकादयश्छलेनाऽत्र ताडिता बहुधा तदा ॥ ९३ ॥

भुक्तं सदन्नं स्वयमेव तेन दास्यै च दत्तम्परिशेषितं ।
व्यापारचर्चां च ततः स कृत्वा चिन्तापरोऽभून्निशि धर्महीनः ॥ ९४ ॥

दास्युवाच

कथमानन्दहीनस्त्वं स्वामिन्वद महामते ! ।
धनेन धनिनान्दुःखं निवर्तेत नचाऽन्यथा ॥ ९५ ॥

सूतउवाच

तस्यास्तु वचनं श्रुत्वा महातेजा महामतिः ।
न किञ्चनोवाच तदा दासीं धर्मपरायणाम् ॥ ९६ ॥
प्रातरुत्थाय गङ्गायां स स्नातुमादृतः सुधीः ।
पुनर्धर्मकथां श्रोतुं गतो देवालयम्महत् ॥ ९७ ॥
महद्भिरादृतः सोऽपि शृण्वित्युक्तः कथाः शुभाः ।
चकार श्रवणस्विष्णुकथानामादृतोऽधिकम् ॥ ९८ ॥
तत्र कश्चिद्द्विजः सान्तः शिवविष्णपरायणः ।
कथा सूविविधाश्चक्रे नाम्ना शान्तव्रतो मतः ॥ ९९ ॥

शान्तव्रतउवाच

जन्मान्तरसहस्रेषु यत्पुण्यं समुपार्जितम् ।
तेन पुण्यकदम्बेन दर्शनं याति काशिका ॥१००॥
काशीदर्शनमात्रेण निष्पापो जायते जनः ।
पुण्यभारम्पापनाशं कृत्वा विशति काशिकाम् ॥१०१॥
तेन पुण्यचयेनाऽत्र जायते शुद्धमानसः ।
मनश्शुद्ध्या मुक्त एव भवत्येव न संशयः ॥१०२॥

**कथाश्रवणप्रसङ्गे काशीविश्वनाथक्षेत्रमाहात्म्यवर्णनम्**

अत्राऽपिचेत्पापसमूहकारी भवत्यजस्रं हि धनान्धबुद्धिम् ।
त्रिलोचनस्तस्य भवत्यवश्यं शास्ता यदाऽत्रैव मृतो भवेत्सः ॥१०३॥
मात्रा पित्रा वाऽपि देवैर्मुनीशैः कर्तुं शक्यं काशिका यत्करोति ।
नो शक्यन्तन्मेऽत्र तीर्थादिभिर्वा ह्यन्यैर्भूपैः किम्वराकैश्च लोकैः ॥१०४॥
प्रवेशमात्रेण नरः कृतार्थः स्थित्वा पुनः पापरतो यदा स्यात् ।
तदा न तस्याऽस्ति शरीरमात्रे मृते विमुक्तिर्ननु यातनान्ते ॥१०५॥
अहर्निशम्वित्तचिन्तातुराणां कलत्रपुत्राप्तगृहादिभाजम् ।
विज्जृम्भते नो परमं काशिसौख्यं यदर्थमास्ते सहरिर्गिरीशः ॥१०६॥
श्रुता स्मृता गदिता बन्धमोक्षं करोति यत्काजिका काशरूपा ।
न काशिका शङ्करचिन्तकानां भवन्ति पापानि मुनीश्वराणाम् ॥१०७॥

प्रवृत्तिभाजाङ्खलु पापराशिः सन्धीयते किं खलु चित्रमत्र ।
यतोऽनृतन्द्वेषहिंसादिसर्वं भवत्यवश्यम्प्रकृतिर्यथा सा ॥ १०८ ॥
द्वेषो मानस्तथा दम्भो रागो लोभः सदारुणः ।
प्रवृत्तिभाजां सततं भवन्त्येते न संशयः ॥ १०९ ॥
क्व काशिकायां सुखदा प्रवृत्तिः क्व पापराशौ विषये प्रवृत्तिः ।
क्व विश्वनाथानुगतिः परप्रदा क्व दीनमर्त्योपसृतिः सुदुःसहा ॥ ११० ॥
इति द्वितीयेऽह्नि कथां सबाहुजः श्रुत्वा श्रुतिज्ञानरहस्यनिष्ठान् ।
गत्वा गृहं स पितुर्देवशालां प्रविश्य चोत्थाय सुदेववृन्दम् ॥ १११ ॥
निक्षिप्तमासीत्स्वयमेव यत्र नीत्वा तु गङ्गां विममर्द सम्यक् ।
स्नात्वा पुनर्देवगणान्गृहीत्वा चागत्य गेहम्विनिधाय सम्यक् ॥ ११२ ॥
दासी समाभाष्य जगाम देवं श्रीविश्वनाथं जगतामधीशम् ।
विधाय पूजाम्पुनरागतो गृहं चाऽऽलोकयामास जनं सुभिक्षुकम् ॥ ११३ ॥
नाऽऽयाति कश्चित्पतितोऽयमित्यतो धनार्थजीवो न वृषार्थजीवनः ॥ ११४ ॥
तस्य दत्तं न गृह्णाति काश्याङ्कश्चिदथाऽन्त्यजः ।
किम्पुनर्ब्राह्मणादिर्हि धर्मरक्षाकरः शुचिः ॥ ११५ ॥
अथ देवान् क्षालयित्वा चन्दनादि निवेद्य च ।
दास्या सम्भृतसम्भारः पक्तुं समुपचक्रमे ॥ ११६ ॥
पक्त्वा द्वितीयेऽप्यहनि भुक्तवानन्नमुत्तमम् ।
शिष्टन्दास्यै निवेद्याऽथ दासीमाह सबाहुजः ॥ ११७ ॥
दासिके ! त्वत्प्रसादेन प्राप्ता काचिच्छुभा मतिः ।
त्वत्समो न हितः कश्चित्त्रैलोक्ये सचराचरे ॥ ११८ ॥
आगच्छ भुङ्क्ष्व भोगांस्त्वं ददस्व परिधत्स्व च ॥ ११९ ॥

दास्युवाच

हितम्मया कृतं किन्ते सन्तो हि हितकारकाः ।
सतां सङ्गाद्धर्मकथा भवन्ति हितकारकाः ॥ १२० ॥
सत्सङ्गमासाद्य तुकाः कथाः कर्णपथङ्गता ।
तव स्वामिन् ! कथय मे ममाऽपि सुखदोभव ॥ १२१ ॥

महातेजाउवाच

अद्य तिष्ठ न प्रष्टव्यं त्वया किञ्चिच्छुभानने ! ।
श्वः सर्वङ्कथयिष्यामि यद्वृत्तं हृदये मम ॥ १२२ ॥

इति श्रुत्वा तु सा तूष्णीमास सेवापरायणा ।
अहर्निशम्महातेजाः कथार्थम्प्रविचारयत् ॥ १२३ ॥
पश्चात्तापपरश्चासीज्जीविते मरणे तथा !
जय शङ्कर ! विश्वेश ! जय दीनपरायण ॥ १२४ ॥
मामुद्धर जगन्नाथ ! पतितं धनलोलुपम् ।
प्रतिक्षणं शिवशिवशिवेति प्रवदत्यसौ ॥ १२५ ॥
रात्रौ निद्रा विशति तं न कथञ्चिदपि क्षणम् !
प्रातरुत्थाय स पुनः स्नात्वा विश्वेशमर्च्य च ॥ १२६ ॥
सत्सभाम्प्राप्य स धनी बाहुजः परया मुदा ।
सद्भिरप्यादृतः सोऽथ कथां शंसद्भिरुत्तमैः ॥ १२७ ॥
अहो महत्त्वं हि सतां कथया श्रवणेन च ।
महातेजा महापापो जातः श्रवणतत्परः ॥ १२८ ॥
बभूव शङ्करपरो विष्णुकाशीमहत्परः ।
उपविष्टः कथां श्रोतुमेकाग्रः स विगर्हितः ॥ १२९ ॥
ततः प्रवृत्ता महती कथा मलविनाशिनी ।
महापुण्यप्रदा तत्र भोगमोक्षैकशेषधिः ॥ १३० ॥
शान्तव्रतस्ततः शम्भुं नमस्कृत्य पुनः पुनः ।
कथयामास सुकथां काशिवासिजनप्रियाम् ॥ १३१ ॥

**काशीक्षेत्रे साकृतसम्वादनमहिमवर्णनम्**

शान्तव्रतउवाच

देवाश्च ऋषयः काश्यां राजानश्चक्रवर्तिनः ।
यत्राऽऽगत्य जितप्राणा भवन्ति न बहिर्मुखाः ॥ १३२ ॥
शृण्वन्तु लोका मधुरम्मदुक्तं जगद्धितम्पथ्यमपारसौख्यदम् ।
विश्वेशपुर्याम्वसतिन्तु लब्ध्वा यथास्थितिर्धर्मपराऽत्र कार्या ॥ १३३ ॥
काशीमहोत्सवमवाप्य महाजनोऽयं सम्प्रार्थयत्यखिलसाधनसिद्धरूपम् ।
विश्वेश्वरं सकललोकगुरुं सदाप्तं द्रष्टुं शुभाशुभविनाशमुमासहायम् ॥ १३४ ॥
काश्यां येषां नाम गृह्णन्ति लोका बीजन्तेषां जायते मोक्षमार्गे ।
काशीं ये वै संस्मरन्त्यन्यदेशे तानप्यात्मा शङ्करस्तारयेच्च ॥ १३५ ॥
काश्यां ये वै शीघ्रमायुर्व्ययेन सिद्धम्प्राप्तास्ते तु तीर्णा भवाब्धेः ।
देशः कालो लोकयानिस्तथाऽत्र पक्षे पक्षे क्षीयते सङ्गदोषात् ॥ १३६ ॥

कलौ पूर्वावस्था न भवति परा भारत ! नृणाम् ।
यथा सत्ये सम्यक् प्रतिदिनमपारः शुभचयः ॥१३७॥
अतः काश्यां शुद्धैर्जितविविधलौल्यैर्गुरुरतैः ।
प्रवस्तव्यं नित्यं हरिहरकथास्वादनपरैः ॥१३८॥
यत्र यत्र निवसन्ति साधवो माधवैकशरणाः शिवाज्ञया ।
मानयन्ति सुकृतं न पातकम्पातकाद्भयमुमापतेर्भवेत् ॥१३९॥
शरीरसंस्कारकृतो महाजना बहिस्तथाऽन्त शिवदर्शनार्थम् ।
असंस्कृतम्पश्यति नो हरः स्वयं ह्यसंस्कृता नो भगवन्तमीश्वरम् ॥१४०॥
पश्यन्त्युमावल्लभमादिपूरुषं पतिव्रतावन्नियतैकमानसाः ।
स किम्महात्मा व्यभिचारिणां नृणां सुदर्शनम्पाति रतिप्रियः सदा ॥१४१॥
काशीस्थलोको न यमाद्बिभेति न दुःखसङ्गान्न च गर्भवासात् ।
बिभेति चैवम्महतो भयात्परं यन्मानुषत्वं शिवविष्णुहीनम् ॥१४२॥
गङ्गास्नानम्विश्वनाथानुवृत्तिस्तत्तत्तीर्थस्नानदेवार्चनञ्च ।
दानं शक्त्या सत्कथासत्प्रसङ्गः पापात्त्रासः कीर्तनं शम्भुनाम्नाम् ॥१४३॥
कुर्यादेवं क्षेत्रमध्ये स्थितो वा नोचेत्तीव्रा यातना भैरवी स्यात् ।
एतच्छ्रुत्वा क्षत्रियो व्याकुलोऽभूत्पापात्त्रस्तः शीघ्रमागत्य सत्सु ॥१४४॥
नत्वाऽष्टाङ्ग हा ! हतोऽस्मीति मोच्चैर्व्याक्रुश्यासीद्दुर्मना दीनदीनः ।
सद्भिश्चोक्तः किञ्चिदप्याशु तत्त्वं ब्रूहि ब्रूहि ब्रूहि कुर्मो वयन्तत् ॥१४५॥
का ते पीडाकिन्तवप्रार्थ्यमस्ति काशीनाथः सर्वमेवाऽत्र कुर्यात् ॥१४६॥
न धनं न सुता दारा न देहो गेहमेव तत् ।
कदाचिदुपकुर्वन्ति वराकाः क्षणभङ्गुराः ॥१४७॥
यथोपकारी सततं विश्वेशो विश्वया सह ।
तमेव भजतांनृणामुपकारा भवन्ति हि ॥१४८॥

महातेजाउवाच

अहं सुतेजसः पुत्रो महातेजाः प्रकीर्त्तितः ।
क्षत्रियः कुलशीलादियुक्तः सूर्यान्वयोद्भवः ॥१४९॥
पिता मम स्वधर्माग्र्योवदान्यः सज्जनाग्रणीः ।
तस्य गेहे महापापः समुद्भूतोऽहमन्त्यजः ॥१५०॥
जनलोभेन पापानि कृतानि सुमहान्त्यपि ।
दासीपतिरहन्त्वद्य परिणीतामृता वधूः ॥१५१॥

निन्दितैर्बहुभिर्मार्गैस्तद्ध नं सञ्चितवानहम् ।
संख्यातस्य धनस्याऽऽशु मयाऽपिनाऽवगम्यते ॥ १५२ ॥
काश्यामेव मया सर्वं सञ्चितम्पापमार्गतः ।
रक्षका अपिनो सन्ति पुत्राद्या मम वस्तुतः ॥ १५३ ॥
मम गेहे वृता दासी सदा श्रवणतत्परा ।
तयाऽहम्प्रेषितःसत्सु कथाश्रवणहेतवे ॥ १५४ ॥
श्रुता दिनत्रयं धर्मकथा पापप्रणाशिनी ।
विवेकदायिनी काश्या विश्वेशस्य महात्मनः ॥ १५५ ॥
अथ लज्जा सुमहती जाता मम महाधियः ।
प्रायश्चित्तं वदन्त्वद्य येन शुध्येन्नरः सदा ॥ १५६ ॥

**काश्यां कृतानाम्पापानां प्रायश्चितवर्णनम्**

एकमेव महद्भूतं प्रायश्चित्तं दृढन्द्विजाः ! ।
सर्वपापानि नश्यन्ति काश्यामपि कृतानि हि ॥ १५७ ॥
काश्यां कृतानाम्पापानां प्रायश्चित्तं न विद्यते ।
श्रूयते महताम्वक्त्राब्दिभेमि हि ततो ध्रुवम् ॥ १५८ ॥
अवश्यं निष्कृतिर्वाच्या कृपया तारकैर्द्विजैः ॥ १५९ ॥
धनेन देहेन यथा मम स्याच्छुद्धिस्याऽन्विष्य वदन्तु शीघ्रम् ।
नो चेत्पतिष्यत्यवशो हि देहो मनुष्यरूपो नतु मानवार्थः ॥ १६० ॥

सदस्याऊचुः

काश्याङ्कृतानाम्पापानां निष्कृतिर्नरदुर्ल्लभा ।
वदन्ति हि पुराणानि वेदाः स्मृतिगणाअपि ॥ १६१ ॥
तथापि शङ्करेणोक्तमस्ति किञ्चित्त्र चक्ष्महे ।
श्रद्धया क्रियते यर्हि तदा वासफलं लभेत् ॥ १६२ ॥
यातनासु पतित्वा किं मोक्षः साध्यः सुमानवैः ।
यद्यस्ति सञ्चयो राजन् ! कुरु धर्ममनामयम् ॥ १६३ ॥
न हि धर्मसमो बन्धुः सोऽपि तञ्चाऽनुगच्छति ।
पृष्टो विश्वेश्वरो देवो ऋषिभिः पापभीरुभिः ॥ १६४ ॥
काश्यां स्थितैर्महापुण्यैर्जैगोषव्यादिभिर्भयात् ॥ १६५ ॥

ऋषयऊचुः

देव ! देव ! महादेव ! काशिवासिजनप्रिय ! ।
काश्याङ्कृतानाम्पापानां प्रायश्चित्तम्वदाऽऽशु नः ॥ १६६ ॥

श्रीभगवानुवाच

धनेषु विद्यमानेषु गृहमुत्थापयेत्सुधीः ।
सर्वलक्षणसम्पन्नं दैन्यकार्पण्यवर्जितम् ॥ १६७ ॥
वित्तानुमानेन महत्काशिवासिसुखप्रदम् ।
आर्ताय द्विजवर्यायु साधवे तंनिवेदयेत् ॥ १६८ ॥
अन्नवस्त्रादिसंयुक्तं कुप्यभाण्डादिसम्भृतम् ।
शय्यापीठादिसंयुक्तं गृहम्पात्रे निवेदयेत् ॥ १६९ ॥
यत्र विष्णुकथाः सत्या मम धर्मकथाः शुभाः ।
भवन्त्यविरतब्तत्र पात्रवर्ये निवेचयेत् ॥ १७० ॥
देवकार्यं पितृकार्यं सताम्विश्राममेव तत् ।
तद्दत्तमुद्धरेत्पूर्वान् दात्रा सह ममाऽऽज्ञया ॥ १७१ ॥
या गतिर्गृहदातुःस्यात् पितृणामपि सा गतिः ।
तस्मात्काश्याङ्गृहसमं दानं नास्ति महद् द्विजाः ! ॥ १७२ ॥
ब्राह्मणो यत्र वसति दिनमात्रमपि स्वतः ।
तत्सात्कृते किम्पुनः स्याद्वर्णनीयं फलप्रदम् ॥ १७३ ॥
काश्याङ् कृतानाम्पापानां शुष्कार्द्राणान्धिया पुनः ।
प्रायश्चित्तम्मुख्यमेतत्काशीवासफलप्रदम् ॥ १७४ ॥

**काश्यां कृतपापमोचनस्य सरलातिखरलोपापवर्णनम्**

दत्त्वा गृहम्पापभीरुः प्रवृत्तिम्परितस्त्यजेत् ।
प्रवृत्त्या पुनरायान्ति संस्कारात्पातकान्युत ॥ १७५ ॥
अतत्त्वज्ञमविश्रान्तमलब्ध्वाऽऽत्मानमस्थिरम् ।
निगिरन्तीन्द्रियाण्याशु प्रवृत्त्याऽपि हि धार्मिकम् ॥ १७६ ॥
एतादृशमपीत्थम्वै धर्मैर्युक्तम्महामतिम् ।
काशिका मोचयत्येव प्रायश्चित्तपरन्नरम् ॥ १७७ ॥
काश्यां तिष्ठामि सगणः सावधानः सदा द्विजाः ।
अत्राऽऽनन्दवने यस्तु शिवालयकरो भवेत् ॥ १७८ ॥
पातालमर्त्यलोकेषु कृतदेवालयः स च ।
इष्टकापुञ्जकृद्यस्तु कौतुकेन नरः सकृत् ॥ १७९ ॥
काश्यां जलाशयं किञ्चित् गर्त्तमात्रम्मुनीश्वराः ।
करोति विवशोऽप्यत्र कृतैः पापैः प्रमुच्यते ॥ १८० ॥

न तयोः साम्यमायाति सर्वदृक्सर्वतीर्थकृत् ।
शिवलिङ्गस्य पूजा चेत्प्रत्यहं जायते सकृत् ॥ १८१ ॥
तदा लिङ्गप्रतिष्ठायाः फलमाप्नोति सन्ततम् ।
जलाशयस्य खनने लिङ्गोत्खातो भवत्यपि ॥ १८२ ॥
यतः सर्वा लिङ्गमयी काशी काशितसत्पदा ।
शिवं शिवालयङ्कार्यां कृतभङ्गं निरीक्ष्य च ॥ १८३ ॥
अनुतापो भवति चेन्कर्त्तुः प्रियकरः सदा ।
जीर्णोद्धारम्प्रकुर्वन्ति जलाशयशिवालयौ ॥ १८४ ॥
शिवायतनलक्षाणि विष्णोरायतनानि च ।
कृतानि तेन विप्रेन्द्राः! प्रीयेऽहं सचराचरः ॥ १८५ ॥
शिवालयशतङ्कत्वा यत्फलम्प्राप्यते नृभिः ।
द्विजालयेन चैकेन तत्फलन्त्वक्षयम्भवेत् ॥ १८६ ॥
तस्मात्किञ्चिद्यथाशक्त्या कुर्याद्विप्रो यथा वसेत् ।
क्षेत्रे कृतानाम्पापानां प्रायश्चित्तमिदं श्रुतम् ॥ १८७ ॥
पुत्रपौत्रादियुक्ताय काशीवासाभिलाषिणे ।
शिवभक्तिपरायाऽपि विष्णुव्रतपराय च ॥ १८८ ॥
महापातकसङ्घस्तु गृहदत्ते क्षयम्व्रजेत् ।
अन्तर्गृहे गृहं यस्तु कृत्वा विप्राय चाऽर्पयेत् ॥ १८९ ॥
मद्गेहं निर्मितं तेन मह्यं दत्तं न संशयः ॥ १९० ॥

सदस्याऊचुः

एवं भगवता प्रोक्तं प्रायश्चित्तं तृतीयकम् ।
श्रुत्वा महर्षयो हर्षं लेभिरे काशिवासिनः ॥ १९१ ॥

महातेजाउवाच

विधिम्वदत दानस्य मम सर्वाघनुत्तये ।
यथा दद्याङ्गृहं यस्मै द्विजाय धनसंयुतम् ॥ १९२ ॥

सदस्याऊचुः

यथाकथञ्चिद्विप्रोवै वसेद्गेहे सुखी सुधीः ।
स एव मुख्यो हि विधिर्यत्र धर्मः प्रवर्त्तते ॥ १९३ ॥
कश्चिद्विश्रमते यत्र धर्मशालेति सा स्मृता ।
तयाऽप्यनन्तम्भवति पुण्यम्पापञ्च नश्यति ॥ १९४ ॥

